## ॥ ५२ ॥ अजिरशिशिरशिथिलशिबिरस्थिरस्फिर-स्थविरखदिराः ॥ १—५२ ॥

अजिरादयः शब्दाः[1] किरच्प्रत्ययान्ता निपात्यन्ते । "अज गतिक्षेपणयोः" । अस्मात् किरच्प्रत्ययः वीभावाभावश्च निपात्यते । अजतीति **अजिरः** वायुः प्राङ्गणं च ॥ "शश प्लुतगतौ" । शशेः किरच्, उपधाया इत्वं च[2] । शशतीति[3] **शिशिरः** कालविशेषः ॥ "श्रथं[4] शैथिल्ये" अस्मात्[5] किरच् । श्रथेरुपधाया इत्वं रेफलोपश्च[6] । श्रथते[7] इति **शिथिलम्** अन्तरिक्षं शैथिल्यगुणयुक्तं च । रलयोः एकत्वस्मरणात् शिथिलम् ॥ शीङो बुक्, ह्स्वश्च[8] । शय्यते अस्मिन्निति **शिबिरं** सेनानिवेशः[9] ॥ तिष्ठतेः किरच् । "आतो लोप इटि च" इत्याकारलोपः[10] । उत्पत्तिकालात् कालान्तरे तिष्ठतीति **स्थिरम्**[11] अचलम् ॥ "स्फायी[12] ओ प्यायी वृद्धौ" । यकाराकारयोः लोपः । स्फायत इति **स्फिरम्** बहुसारम् ॥ "ष्ठिवु निरसने" ष्ठिवेः किरच् । इवशब्दस्य[13] स्थाने अवादेशः । ष्ठीव्यते निरस्यत इति **स्थविरः** वृद्धः ॥ "खाद भक्षणे" खादतीति[14] **खदिरः** । उपधाया ह्रस्वः । खदिरो वृक्षविशेषः । "खद स्थैर्ये" इत्यतो वा खदिरः ॥

---

## ॥ ५३ ॥ सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकि-भूभ्य इलच् ॥ १—५३ ॥

"षल कान्तौ" "कलें[15] विक्षेपणे" "अन प्राणने" "मह पूजायाम्" ।

---

१. B omits शब्दाः.
२. B omits च.
३. B omits इति.
४. A and C श्लथ.
५. B and C तस्मात्.
६. B omits लोप-
७. A श्लथते. C श्लथयति.
८. B ह्रस्वत्वं च.
९. B विशेषः.
१०. B omits आकारलोपः.
११. B स्थिरः.
१२. C adds स्थायी.
१३. B शब्दस्थाने.
१४. B omits इति.
१५. B "कल किल क्षेपणे"

"भडिः" सौत्रो धातुः । "भण्डि परिभाषणे" "शाण्ड रुजायाम्" "पिडि सङ्घाते" "तुडि तोडने"। तोडनं निवर्जनम् । "कुकं आदाने" "भू सत्तायाम्" । एभ्य इलच्प्रत्ययो भवति[2] । सलतीति **सलिलं** पानीयम्[3] ॥ कलयतीति **कलिलः** सङ्घातः ॥ अनतीति **अनिलो** वायुः[4] ॥ मह्यत इति **महिला** स्त्री ॥ **भडिलः** भृत्यः ॥ भण्डयतीति **भण्डिलः** परिभाषकः ॥ शण्डयतीति **शण्डिलः**[5] तीर्थम् ऋषिविशेषो वा ॥ पिण्डयतीति **पिण्डिलः** गणकः ॥ तुण्डयतीति **तुण्डिलः** बहुभाषी ॥ कोकते द्रष्टॄणां मनांसि इति[6] **कोकिलः** पक्षिविशेषः ॥ भवतीति[7] **भविलः** भव्यः ॥

---

## ॥ ५४ ॥ कबेः[8] पश्च ॥ १—५४ ॥

"कबृ वर्णे" अस्मादिलच्प्रत्ययो भवति[9] । पकारश्चान्तादेशः । **कपिलो** वर्णविशेषः ऋषिश्च[10] ॥

---

## ॥ ५५ ॥ गुपादिभ्यः कित् ॥ १—५५ ॥

"गुप गोपने" "कुट कौटिल्ये" । एवमादिभ्यो धातुभ्य इलच्प्रत्ययो भवति[11], किच्च । गोपतीति **गुपिलः** पक्षिविशेषः ॥ कुटतीति[12] **कुटिलं** वक्रम् ॥

---

१. B adds वृक.
२. B omits भवति.
३. B omits पानीयम्.
४. C omits वायुः.
५. A and C शण्डिलम्.
६. B adds "पुगन्तलघूपधस्य च" इति गुणः ॥
७. B adds "सार्वधातुक आर्धधातुकयोः" इति गुणः अवादेशः ॥
८. B कमेः.
९. B omits भवति.
१०. A and C omit ऋषिश्च.
११. B omit भवति.
१२. B कुटिलतीति.

## ॥ ५६ ॥ मिथिलादयश्च ॥ १—५६ ॥

मिथिलादयः शब्दाः इलच्प्रत्ययान्ता निपात्यन्ते । मैथेरित्वम्[1] । मथ्नातीति[2] मेथतीति[3] वा **मिथिला** । "मिथृ मेथृ सङ्गमे च" इत्यस्माद्वा गुणाभावश्च निपात्यते । मिथिला नगरी । "श्रथ शैथिल्ये" । अकारस्येत्वं[4] रेफलोपश्च निपात्यते । श्रथयतीति शिथिला मेखला । ननु च अजिरशिशिरादौ सूत्रे शिथिलशब्दो निपातितः । तेनैवसिद्धम् । नैतदस्ति । संज्ञाशब्दत्वात् उणादीनां व्युत्पत्तेरनियमात् ॥

---

## ॥ ५७ ॥ पथिकथिकुठिगडिगुडिदंशिभ्य एरक् ॥ १—५७ ॥

"पथि गतौ" "कथ वाक्यप्रबन्धे[6]" ["कुठि[5] प्रतिघाते"[7]] "गड सेचने" "गुड घनत्वे" "दंश दंशने" । एभ्य एरक्प्रत्ययो भवति । पथि[8] गच्छतीति **पथेरः**[9] गन्ता ॥ कथयतीति **कथेरः** ॥ कुण्ठतीति[10] **कुठेरः** ॥ गडतीति **गडेरः** ॥ गुडतीति **गुडेरः** ॥ दशतीति **दशेरः** उष्ट्रजातिः ॥

---

## ॥ ५८ ॥ कुम्बेर्नलोपश्च ॥ १—५८ ॥

"कुबि च्छादने" अस्मादेरक्प्रत्ययो[11] भवति, नलोपश्च । कुम्बतीति[12] **कुबेरः** वैश्रवणः । प्रत्ययस्य कित्वेऽपि इदित्त्वाद्धातोः नलोपवचनम् ॥

---

१. A and C omit मथेरित्वम्.

२, ३. B omits इति.

४. B omits अकारस्य........निपात्यते.

५. B omits कुठि.

६. B प्रबन्धने.

७. The words within brackets are omitted in all the Mss.

८. A पथति.

९. A परैरागन्ता.

१०. A कुठयतीति.

११. B omits अस्मात्.

१२. B कुम्बयतीति.

## ॥ ५९ ॥ शदेस्त च ॥ १—५९ ॥

"शद्लृ शातने" अस्मादेरक्प्रत्ययो भवति[२]। [३]तत्सन्नियोगेन तकारश्चान्तादेशः। शीयत इति शदेरः॥

---

## ॥ ६० ॥ मूलेरादयश्च ॥ १—६० ॥

मूलेरादयः शब्दा एरक्प्रत्ययान्ता निपात्यन्ते। "मूल प्रतिष्ठायाम्" "कुट कौटिल्ये" "कुर्द [४]खुर्द गुद क्रीडायामेव" "कड मदे"। मूलयतीति मूलेरः॥ [[५]कुटति इति] कुटेरः॥ गो[६]दत इति गुदेरः॥ कडतीति कडेरः॥

---

## ॥ ६१ ॥ कठिचकिभ्यामोरच् ॥ १—६१ ॥

"कठ कृच्छ्रजीवने" "चक तृप्तौ प्रतिघाते च"। आभ्यामोरच्प्रत्ययो [७]भवति। कठतीति कठोरः कर्कशः॥ चकतीति चकोरः पक्षिविशे[८]षः पर्वतश्च॥

---

## ॥ ६२ ॥ किशोरादयश्च ॥ १—६२ ॥

किशोरादयः शब्दा ओरच्प्रत्ययान्ता निपात्यन्ते। "कश गतिशासनयोः"। कश्यत इति किशोरः। उपधाया इत्वम्। किशोरः [९]अश्वशावः बालश्च[१०]॥

---

१. B omits root and meaning.
२. B omits भवति.
३. A omits तत्.
४. A गुर्द.
५. A, B and C omit the words within brackets.
६. B omits गोदत इति.
७. B omits भवति.
८. B omits पक्षिविशेषः. C शकुनिविशेषः.
९. A and B omit अश्वशावः
१०. A and C omit च.

॥ ६३ ॥ कपिकडिगडिकटिपटिभ्य ओलक् ॥ १—६३ ॥

"कप च्छादने" "कड मदे" "गडि वदनैकदेशे" "कटे वर्षावरणयोः" "अट पट गतौ"। एभ्यः ओलक्प्रत्ययो भवति। ककारः कित्कार्यार्थः। कपतीति **कपोलः** वदनैकदेशः॥ **कडोलः** मकरद्रव्यविशेषः॥ **गण्डोलः**॥ **कटोलः**॥ **पटोलः** लताविशेषः॥

---

॥ ६४ ॥ बहुलमन्यत्रापि ॥ १—६४ ॥

अन्यत्रापि धातुषु बहुलमोलक्प्रत्ययो दृश्यते[1]। "उणादयो बहुलम्" इति बहुलग्रहणस्यैवायं प्रपञ्चः। "शकॢ शक्तौ"। शकेरोलक्। शकोलः॥

---

॥ ६५ ॥ सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ १—६५ ॥

"षिञ् बन्धने" "तनु विस्तारे" "गमॢ सृपॢ गतौ" "मसी परिणामे" "षच समवाये" "अव रक्षणादिषु" "डु धाञ् धारणपोषणयोः"[3] "क्रुश आह्वाने रोदने च[4]"। [5]एतेभ्यस्तुन्प्रत्ययो भवति[6]। [7]सिनोति बध्नाति जलमिति **सेतुः** जलावरणम्[8]॥ तनोतेः "तितुत्र" इति इडागमनिषेधः। एवमुत्तरत्रापि यत्रेट्प्राप्तिः तस्यानेनव निषेधो भविष्यतीति वेदितव्यम्। तन्यत इति **तन्तुः** सूत्रम्॥ गच्छतीति **गन्तुः** पथिकः। आङ्पूर्वादागन्तुः अतिथिः॥ मस्यते अनेनेति **मस्तु** दधिसारः॥ सचत इति **सक्तुः** यवविकारः॥

---

1. B omits दृश्यते.
2. B omits बहुलमिति.
3. B and C दानधारणयोः.
4. B omits च.
5. B एभ्यः.
6. B omits भवति.
7. B adds "सार्वधातुकार्धधातुकयोः" इति गुणः.
8. B omits जलावरणम्.

अन्यस्त्वाह "कसतेः सक्तुः" इति। तथा च भाष्यम् "सचतेः सक्तुः, कसतेर्वा विपरीतात्, विकसितो भवतीति कृत्वापि"। अस्माद्भाष्यादपि कर्मणि भूते तुन्प्रत्यय इति दृश्यते ॥

अवति रक्षति आत्मानं सर्वदा इति अवेः तुनि प्रत्यये "ज्वरत्वर" इति वकारस्योपधायाश्चोठि गुणे पर[च] रूपम्। **ओतुः** बिडालः। "ज्वरत्वर" इत्यादौ सूत्रे कि[1]ङ्ग्रहणमनुवर्तते; [2]कथमत्र ऊठ् भवति? उच्यते। किङ्ग्रहणं केचिन्नानुवर्तयन्ति। तथा च वृत्तावुक्तम् "केचिदत्र किङ्ग्रहणं नानुवर्तयन्ति। कथं द्युभ्यां द्युभिः इति ऊठि कृते। "दिव उत्" इतितपरकरणात् मात्राकालो भविष्यति" इति ॥ [3]सत्त्वासत्त्वरूपमर्थमभिदधाति इति[4] **धातु[5]ः** गैरिकादिः भूवादिश्च[6] ॥ क्रोश[7]तीति **क्रोष्टा** सृगालः ॥

---

## ॥ ६६ ॥ पः किच्च ॥ १—६६ ॥

तुन्प्रत्ययोऽनुवर्तते। "पा पाने"। [8]अस्मात् तुन्प्रत्ययो [9]भवति किच्च। कित्वात् "घु[10]मास्थापाजहातिसां हलि" इति सूत्रेण ईत्व[11]म्। पिबत्याकर्षति जै[12]लजालमिति **पीतुः** आदित्य[13]ः अग्निश्च ॥

---

1. B क्विन्ग्रहणं नानुवर्तयन्ति.
2. B omits कथं........वर्तयन्ति.
3. B सत्त्वरूप.
   A and C असत्त्वरूप.
4. A omits इति.
5. B धातुस्त्वगादि.
6. A and B omit च.
7. B adds तकारस्य ककारः। क्रोष्टु इति स्थिते "तृज्वत्क्रोष्टुः" इति उकारस्य ऋकारः। ततः प्रथमैकवचनम्। सु। "ऋदुशन" इत्यादिनानङादेशः।
8. C adds इति.
9. B omits भवति.
10. A and C घुमास्थादि.
11. B omits ईत्वम्.
12. B जलजालमिति.
13. B adds हस्ती.

## ॥ ६७ ॥ मीनातेरूरन् ॥ १—६७ ॥

"मीञ् हिंसायाम्" । अस्मादूरन्प्रत्ययो भवति[१] । मीनाति हिनस्ति सर्पादिकमिति[२] **मयूरः** पक्षिविशेषः । अस्यां व्युत्पत्तौ मयूरशब्द आद्युदात्तः । नित्प्रत्ययान्तत्वात् निति प्रत्यये प्रत्ययान्तस्य आद्युदात्तत्वमिष्यते । तथा चोक्तं भाष्यकारेण [३]"सौवर्यः सप्तम्यः तदन्तसप्तम्यः" इति । पृषोदरादिषु [४]रौतेरपि टिलोपः । महीशब्दस्य[५] मयूर इत्यादेशः[६] । मह्यां रौतीति मयूर इति प्रातिपदिकम् । उभयथा[७] व्युत्पत्तौ इष्टस्वरो न सिद्ध्यति । तथा हि[८]—मयूर-शब्दो मध्योदात्तो वेदेषु पठ्यते । तस्मात् "ञ्नित्यादिर्नित्यम्" इति प्रत्यय-मात्रस्याद्युदात्तं वा विधेयम् । "खर्जिपिञ्जादिभ्य उरोलचौ" इति खर्ज्यादित्वात् ऊकारो वा[९] विधेयः, स्वरे व्यत्ययो वा कर्तव्यः ॥

अव्युत्पत्तिपक्षे तु "लघावन्ते द्वयोश्च बह्वषो गुरुः" इति मध्योदात्तः सिद्धो भवति । अस्य फिट्[१०]सूत्रस्य अयमर्थः । अन्ते एकस्मिन्वा लघौ द्वयोर्वा[११] लघ्वोः परतः बह्वच्शब्दस्य यो गुरुः स उदात्तो भवति । बह्वष इति बह्वच इत्यर्थः[१२] । अव्युत्पत्तिप[१३]क्षेऽप्युणादिषु सिद्धा[१४]न्तित एव । तथा च[१५] भाष्यकारेण बहुश उक्तम् "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति । एवं च कृत्वा "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इति सूत्रमारभ्यते । अन्यथा कृदन्त-त्वात् प्रातिपदिकसंज्ञा सिद्ध्यतीति तदनारम्भणीयम् । व्युत्पत्तिपक्षेऽपि "उणादयो

---

१. B omits **भवति**.
२. B **सर्पानिति**.
३. B **सौवर्यसप्तम्यः**
४. B **रौतेरचि**.
५. B adds **भावः**.
६. B omits **मयूर इत्यादेशः**.
७. B adds **तु**.
८. A omits **हि**.
९. B **उरो वा**.
१०. A and C omit **फिट्**.
११. B omits **द्वयोर्वा लघ्वोः**.
१२. B adds **इति**.
१३. B **-पक्षेषु**.
१४. A and C **सिद्ध्यति**.
१५. A and C omit **च**.

बहुलम्" इत्यादिवचनात्। तथा च स्वरप्रदेशेषु व्युत्पत्त्यव्युत्पत्तिपक्षभेदेन स्वरव्युत्पादनमविरुद्धम्॥

---

## ॥ ६८ ॥ अर्तेश्च तुः ॥ १—६८ ॥

"ॠ गतौ" "ऋ सृ गतौ वा"। अस्मात् तुप्रत्ययो भवति। तुनिप्रकृते[6] तुवचनं स्वरभेदात्। मण्डूकप्लुत्या वा 'किच्च' इति किद्ग्रहणमनुवर्तते। ऋच्छति इयर्ति वा प्राप्नोतीति **ऋतुः** वसन्तादिः स्त्रीपुष्पश्च। बाहुलकाद्गुणाभावः॥

---

## ॥ ६९ ॥ कमिमनिजनिगाभायापाहिभ्यश्च ॥ १—६९ ॥

तुरिति वर्तते। "कमु कान्तौ"। "आयादय आर्धधातुके वा" इति यदा णिङ्नास्ति तदा तुप्रत्यः। "मन ज्ञाने" "जनी प्रादुर्भावे" "गाङ् गतौ" "कै गै शब्दे" "गा स्तुतौ" वा। गाभायाग्रहणेषु अविशेष इति सर्वेषां ग्रहणम्। "भा दीप्तौ" "या प्रापणे" "हि गतौ वृद्धौ च" एभ्यस्तुप्रत्ययो भवति[10]। कामयत इति **कन्तुः** इच्छा मनः चेतश्च[11]। "तितुत्र" इतिडभावः[12]। कन्तुशब्दः पञ्चपाद्यामेव व्युत्पादितः "अर्जिदृशिकम्यमिपंसिबाधाम्" इति; किमर्थं पुनरिदं पुनर्व्युत्पाद्यते? स्वरभेदोऽप्यनयोः नास्ति।

---

1. B omits व्युत्पत्ति.
2. B omits पक्ष.
3. B व्युत्पादम-
4. B omits root and meaning.
5. B omits भवति.
6. B प्रत्यये.
7. A and C omit मण्डूक........ वर्तते.
8. A and C omit स्त्रीपुष्पश्च.
9. A गामाभा-
   B and C गामादा-
10. B omits भवति.
11. B चेतसश्च.
12. A and C add नरः
    B adds नन्तु.

तथा हि[१]—तत्र[२] कुप्रत्ययः प्रकृतः। प्रत्ययस्वरेण स उदात्तः। अयमपि। अत्रोच्यते। उणादीनां संज्ञाशब्दत्वात् बहुधा व्युत्पादनमिति केचित्। संज्ञाशब्देषु हि व्युत्पत्तेरनियमः, अर्थानुगमाभावात्। तथा च[३] इन्द्रियशब्दोऽप्यनियमेन[४] निरुक्तं भगवता पाणिनिना "इन्द्रियमिन्द्रलिङ्गम्" इत्यादिसूत्रेण। अन्ये तु प्रपञ्चार्थं पुनर्व्युत्पादनमित्याहुः। अपरे तत्र सूत्रे "धान्ये नित्" इत्यनुवर्तयन्ति॥

मन्यते[५] इति **मन्तुः** वैमनस्यम्। कण्ड्वादिष्वन्यो मन्तुशब्दोऽव्युत्पन्नः रुषार्थो वेदितव्यः। पूर्ववदिडभावः, एकाच इति वा॥ जायत इति **जन्तुः** प्राणी॥ गायति शब्दयतीति[६] **गातुः** उद्गाता॥ भाति दीप्यत इति **भातुः** आदित्यः॥ यातीति **यातुः** गन्ता॥ पातीति[७] **पातुः** रक्षिता[८]॥ हिनोति गमयति वर्धयतीति वा **हेतुः** कारणम्॥

---

## ॥ ७० ॥ चायः की[९] च ॥ १—७० ॥

"चायृ पूजानिशामनयोः"। अस्मात्तुप्रत्ययो भवति[१०]। धातोः[११] 'की' इत्ययमादेशो भवति। अनेकाल्त्वात् सर्वादेशः। दीर्घोच्चारणं वैचित्र्यार्थम्। न हि ह्रस्वस्य दीर्घस्य वा गुणे कृते विशेषोऽस्ति। अन्ये तु "चायः कि[१२] च" इति ह्रस्वान्तमेव पठन्ति। चाय्यते निशाम्यते ज्ञायते[१३] अनेन इति **केतुः** ज्ञापकः चिह्नमित्यर्थः ध्वजो ग्रहो वा॥

---

१. B omits हि.
२. C adds हि.
३. B हि.
४. B ह्यनियमो.
५. B मन्यन्ते.
६. A and B शब्दति.
७. A and C add वा.
८. A and C omit पातीति........ क्षिता.
९. B किः.
१०. B omits भवति.
११. B omits धातोः... विशेषोऽस्ति.
१२. B adds चायः कीति.
१३. B निशाम्य ज्ञाप्यन्ते.

## ॥ ७१ ॥ आप्नोतेर्ह्रस्वश्च ॥ १—७१ ॥

"आप्लृ व्याप्तौ"। अस्मात्तु प्रत्ययो भवति[1]। अस्याचो ह्रस्वो भवति। "अचश्च" इत्यज्ग्रहणमुपस्थितं धातुना विशेष्यते। आप्यते अनेन[2] स्वर्गादिः इति अप्तुः[3] यज्ञः अग्निश्च ॥

---

## ॥ ७२ ॥ वसस्तुन् ॥ १—७२ ॥

"वस निवासे" अस्मात्[4] तुन्प्रत्ययो भवति[5]। तुन्ग्रहणं[6] पूर्वं तुप्रत्ययेन उरन्प्रत्ययेन[7] च[8] विच्छिन्नमनुवर्तयितुं न शक्यत इति पुनस्तुन्ग्रहणम्[9]। वसन्त्यस्मिन्निति वस्तु द्रव्यं शरीरं च ॥

---

## ॥ ७३ ॥ अगारे णिच्च ॥ १—७३ ॥

[10]वसेस्तुन्नित्येव। वसेः धातोः[11] तुन्प्रत्ययो भवति,[12] अगारेऽभिधेये। अर्थनिर्देशोऽपि स्पष्टार्थः[13]; इतरथा रूढित्वादुणादीनां लोकत एवार्थनिश्चयो भवतीति न[14] कर्तव्यः स्यात्। णिच्च भवति। "अत उपधायाः" इति वृद्धिः। वास्तु गृहम्। क्वचिद्गृह[15]समुदायेऽपि प्रयोगो दृश्यते ॥

---

## ॥ ७४ ॥ कृञः क्तुः ॥ १—७४ ॥

"डु[16] कृञ् करणे" अस्मात् क्तुप्रत्ययो भवति[17]। ककारः कित्कार्यार्थः।

---

१. B omits भवति.
२. B अनेनेति स्वर्गः तिरतु.
३. A and B आप्तुः.
४. C adds धातोः.
५. B omits भवति.
६. B - हणपूर्वकं.
७. B omits उरन्प्रत्ययेन.
८. A and B omit च.
९. A and C तुन्प्रत्ययग्रहणं.
१०. B adds णिच्च.
११. B omits धातोः.
१२. B omits भवति.
१३. C विस्पष्ट-
१४. A and B omit न.
१५. C ग्रह.
१६. A and C कृञः क्तु-
१७. B omits भवति.

तेन गुणोऽपि न भवति। यणादेशश्च[1] भवति। क्रियत इति क्रतुः सयूपो यज्ञः[2]॥

॥ ७५ ॥ एधिवह्योश्चतुः[3] ॥ १—७५ ॥

"एध वृद्धौ" "वह प्रापणे" आभ्यां चतुप्रत्ययो भवति[4]। चकारः स्वरार्थः। एधत इति एधतुः पुरुषः॥ वहति देवानां हव्यमिति वहतुः अग्निः अनड्वांश्च। प्रत्ययान्तस्य समुदायस्य अन्तोदात्तत्वमिष्यते, "चितः सप्रकृतेः बह्वकजर्थम्" इति वचनात्। तथा च वेदे अन्तोदात्तस्य वहतुशब्दस्य प्रयोगो दृश्यते—"वहतुं यक्ष्मा यन्ति" इति। एवं च कृत्वा "एधिवहोरतुः" इति पठन्ति। ते नादरणीयाः॥

॥ ७६ ॥ जीवेरातुः ॥ १—७६ ॥

"जीव प्राणधारणे"। अस्मादातुप्रत्ययो भवति[4]। जीवत्यनेनेति जीवातुः औषधं द्रव्यं च॥

॥ ७७ ॥ आतृकन् वृद्धिश्च ॥ १—७७ ॥

जीवेरिति वर्तते[5]। जीवेः आतृकन् प्रत्ययो भवति[6]। धातोरिको वृद्धिश्च भवति। जीवयतीति जैवातृकः चन्द्रः। जीवति चिरमिति आयुष्मांश्च[7]॥

॥ ७८ ॥ कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः[8] ॥ १—७८ ॥

"कृष विलेखने" भौवादिकः तौदादिकश्च। "चमु छमु जमु झमु

१. B omits यणा....भवति.
२. B यूपो यज्ञश्च.
३. A and C वहो-
४. B omits भवति.
५. B अनुवर्तते.
६. B omits भवति.
७. B omits च.
८. A-धनिसजि-
९. A and C खमु अदने.

अदने" "तनु विस्तारे" "धन धान्ये" "अर्ज षर्ज आर्जने" "सृज विसर्गे"। ण्यन्तो वा। "खर्ज दन्दशूके"। दन्दशूकशब्दः कर्तृ[1]-प्रत्ययान्तः, तथापीह कुत्सितदंशने वर्तते, धातूनां क्रियावचनस्य[2] न्याय्यत्वात्। एभ्य ऊप्रत्ययो भवति[3]। "पुगन्तलघूपधस्य च" इति गुणः। रपरः। कर्षति कण्डूत्पादनेन विलिखत्यनेनेति कर्षूः[4] व्याधिविशेषः गोमयः अग्निः सङ्घातश्च ॥ चमति भक्षयति शत्रून् इति चमूः सेना ॥ तन्यते अनेनेति तनूः शरीरम्[5] ॥ धनत्यनेनेति[6] धनुः शरः ॥ सर्जयते[7] आर्जयते इति सर्जूः वणिक् ॥ खर्जयतीति खर्जूः मण्डूको विद्युच्च ॥

---

## ॥ ७९ ॥ मृजेर्गुणश्च ॥ १—७९ ॥

"मृजूष्[8] शुद्धौ" अस्मादूप्रत्ययो भवति[9], मृजेरिको गुणश्च भवति[10]। "मृजेर्वृद्धिः" इत्यस्यापवादो गुणो विधीयते। मृज्यत इति मर्जूः रजः शुद्धिश्च। प्रायेण ऊप्रत्ययान्ताः स्त्रीलिङ्गाः। तथा च हर्षवर्धनः "आदीदूतः स्त्रियां प्रायः" इति। अन्यत्र च अन्यूप्रत्ययान्तो धातुरिति ॥

---

## ॥ ८० ॥ खडेश्च ॥ १—८० ॥

"खंड[11] खडि कड भेदने" अस्मादूप्रत्ययो भवति[12]। खडयतीति खडूः मृतशय्या[13] ॥

---

१. C कर्तृप्रत्ययोऽदन्तः.
२. A and C वचनन्या-
३. B omits भवति.
४. A and C omit पुग....रपरः.
५. B omits शरीरम्.
६. B दधन्यतेऽनेनेति.
७. B सर्जयतीति.
८. B and C मृजू.
९, १०. B omits भवति.
११. B omits खड खडि.
१२. B omits भवति.
१३. B मृगशय्या.

## ॥ ८१ ॥ वहेर्धश्च ॥ १—८१ ॥

"वह[1] प्रापणे" अस्मात् ऊप्रत्ययो भवति[2], धातोः धकारश्चान्तादेशः[3]। उह्यत इति कर्मण्यग्प्रत्ययः। उह्यमाना वधूः अभिनवपाणिग्रहणा। अन्यत्र स्त्रीमात्रे गौणः॥

---

## ॥ ८२ ॥ कषेश्छ[4] च ॥ १—८२ ॥

"कष" हिंसार्थः, दण्डकेषु पठितः। अस्मादूप्रत्ययो भवति[5], छकारश्चरन्तादेशः। "छे[6] च" इति तुक्। "स्तोः श्चुना श्चुः" इति तकारस्य चकारः। कषत्यनयेति[7] कच्छूः पामा॥

---

## ॥ ८३ ॥ णित्कसिपद्यर्तेः ॥ १—८३ ॥

"कस गतौ" "पद गतौ" "ऋ गतौ" एभ्य ऊप्रत्ययो भवति[8], स च णित्। णित्वाद्वृद्धिः। कसतीति कासूः आयुधविशेषः शक्तिसंज्ञाख्या[9] बुद्धिविकलवाक्[10] च॥ पद्यते अनया इति पादूः पादधारिका॥ अर्यतेऽनया[11] इति आरूः वेदिका पिङ्गलश्च॥

---

## ॥ ८४ ॥ अणो ड च ॥ १—८४ ॥

णिदित्यनुवर्तते। "अण रण" इति शब्दार्थः दण्डके पठितः। अस्मादूप्रत्ययो भवति[12], डकारश्चान्तादेशः। अणतीति[13] आडूः योनिव्याधिः॥

---

१. A and C वहेरू-
२. B omits भवति.
३. B धकारान्ता-
४. B छश्च.
५. B omits भवति.
६. A and C omit छे च........ चकारः
७. B reads कर्षन्त्यनेनेति कृच्छ्रः.
८. B omits भवति.
९. A and C शक्तिसंज्ञस्याख्या.
१०. B बुद्धिः.
११. A, B and C यया.
१२. B omits भवति.
१३. B adds णिच्च.

## ॥ ८५ ॥ ञि लम्बेर्नलोपश्च ॥ १—८५ ॥

"लबि अवस्रंसने"। अस्मान्ञ्युपपदे ऊप्रत्ययो भवति[1], तत्सन्नियोगेन नकारलोपश्च भवति[2]। चकारात् णिदिति वर्तते। णित्वाद्वृद्धिः। न लम्बत इति अलाबूः तुम्बीरफलम्। "अप्राणिजातेश्चारज्ज्वादीनाम्" इति ऊङ् स्वरार्थम्॥

---

## ॥ ८६ ॥ के शृ एरङ् चास्य ॥ १—८६ ॥

"शॄ हिंसायाम्"। अस्मात् कशब्द उपपदे ऊप्रत्ययो भवति[4]। अस्य धातोरेरङादेशः। ङित्वादन्तादेशः। उपपदसमासः। सुपो लुक्। कशेरूः जलजातिविशेषः वीरुद्विशेषश्च फलजातिश्च। अस्यग्रहणं धातोरादेशो यथा स्यात्। इतरथा हि[5] प्रथमातिक्रमे हेत्वभावात् उपपदस्य प्राप्नोति। अस्यग्रहणे तु सत्यनन्तरस्य सर्वनाम्ना परामर्शात् धातोरेवादेशः। कशब्दः प्रजापतेर्वाचकः। कस्येति यथा कथञ्चिदुपपदकल्पना। तेन कशब्दस्यार्थो न गम्यत इति न चोदनीयम्॥

---

## ॥ ८७ ॥ त्रो डुक् च ॥ १—८७ ॥

"तॄ प्लवनतरणयोः" अस्मादूप्रत्ययो भवति, डुँक्चास्य धातोरागमः। तरतीति तर्डूः[11] खजिका कच्छपश्च॥

---

१, २. B omits भवति.

३. B adds श्रः पञ्चम्येकवचने। इदं-शब्दस्य षष्ठ्येकवचनम्। "त्यदादीनामः" इत्यत्वम्। "अतो गुणे" इति पररूपत्वम्। "टाङसि" इति स्यः। "हलि लोपः" इतीद्रूपस्य लोपः॥

४. B omits भवति.

५. B omits हि.

६ B उपरिकल्पना.

७. B. दुक्

८. B omits भवति.

९. B. दुक् चास्य.

१०. B धातोर्दुगागमः.

११. B तर्दूः.

## ॥ ८८ ॥ दरिद्रातेर्यालोपश्च ॥ १—८८ ॥

"दरिद्रा दुर्गतौ" [1]अस्मादूप्रत्ययो भवति यालोपश्च । इश्च आश्च यौ, तयोर्लोपः, इकाराकारयोर्लोपः इत्यर्थः । दर्द्रूः कुष्ठभेदः ॥

---

## ॥ ८९ ॥ नृतिशृध्योः कू ॥ १—८९ ॥

[2]नृतिशृध्योः कू इत्येष प्रत्ययो भवति । "नृती गात्रविक्षेपे" "शृधु [3]मृधु उन्दे" । [4]ऊप्रत्यये प्रकृते कूप्रत्ययविधानं कित्कार्यार्थम् । नृत्यतीति नृतूः दीर्घक्रिमिः ॥ [5]शृधूः गुणः प्रज्ञा च ॥

---

## ॥ ९० ॥ ऋतेरम् च ॥ १—९० ॥

ऋतिः सौत्रो धातुः [6]घृणागतिस्पर्धासु वर्तते। "आयादय आर्धधातुके वा" इति यदा ईयङ् प्रत्ययो[7] नास्ति, तदा कूप्रत्ययः धातोरमागमश्च । अमागमे यणादेशः । ऋतीयते गच्छतीति रतूः नदी ॥

---

१. B omits अस्मात्................ कुष्ठभेदः and has instead षष्ठ्येकवचनम् । "सुपां सुलुक्" इति लुक् । रिशब्द आशब्दयोः प्रथमैकवचनम् । रिश्च आश्चेति "चार्थे द्वन्द्वः" "इको यणचि" इति यणादेशः । तयोः लोपश्च । षष्ठीद्विवचनम् । ओस् । तयोर्लोपः । "षष्ठी" इत्यनेन समासः । ततः प्रातिपदिकसंज्ञायां सु अस्मादूप्रत्ययः लोपश्च [?] । दद्रूः कुष्ठभेदः ॥

२. B omits नृति....भवति.

३. B omits "मृधु उन्दे" but has instead अभिकाङ्क्षायाम् । आभ्यां कुप्रत्ययः ॥

४. A and B कुप्रत्यये कृते.

५. B गृध्नुः गुणप्रतिज्ञा च.

६. A and C घृणाति.

७. B omits प्रत्ययः.

## ॥ ९१ ॥ अन्दूदृन्[1]भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥ १—९१ ॥

अन्दू इत्यादयः कूप्रत्ययान्ता निपात्यन्ते । "अति अदि बन्धने" अस्मात् कूप्रत्ययः । अन्दूयतीति **अन्दूः** अयोमयी शृङ्खला ॥ "[2]दृभी ग्रन्थे" **दृन्[3]भूः** सर्पजातिः ॥ "चमु छमु जमु झमु[4] अदने" जम्यत इति **जम्बूः**; बुगागमः ; वृक्षविशेषः ॥ "फल निष्पत्तौ" कशब्द उपपदे फलतेः कूः[5], फलेरुपधाया एत्वं च[6] । कं जलं फलतीति **कफेलूः** श्लेष्मातकः ॥ कर्कशब्दोपपदात् धाञः कूप्रत्ययः । उपपदस्य नुक् । **कर्कन्धूः** बदरी ॥ दधातेः द्विर्वचनं इषुक् चागमः । **दिधिषूः** पुनर्भूः ॥

---

## ॥ ९२ ॥ मृग्रोरुतिः ॥ १—९२ ॥

"मृङ्[7] प्राणत्यागे" "गॄ निगरणे" आभ्यां उतिप्रत्ययो भवति[8] म्रियते गच्छति इति **मरुत्** वायुः[9] पर्व च ॥ **गरुत्** पक्षः तेजस्सङ्घातः मणिविशेषश्च ॥

---

## ॥ ९३ ॥ [10]गर्मुट् च ॥ १—९३ ॥

गृ[11]णातेः गरतेर्वा उतिप्रत्ययः मुडागमश्च[12] निपात्यते । [13]गर्मुट् सुवर्णम् रविः मधुप्रकृतिद्रव्यविशेषश्च[14] ॥

---

1. C द्रंभू.
2. B and C द्रफि
3. C द्रंभूः
4. A and C omit झमु.
5. B वुप्रत्ययः.
6. A and C omit च.
7. A and C म्रियतेः गिरतेः गृणातेर्वा.
8. B omits भवति.
9. C omits वायुः.
10. A ग्रो रुच.
    B ग्रो मुट्.
11. B "गॄ निगरणे" अस्मात् उति-
12. B adds गुणश्च.
13. A गर्मुत् C गरुट्.
14. A and C add च.

॥ ९४ ॥ हृषेरुलच् ॥ १—९४ ॥

"हृष हृष्टौ"[1] "हृष अलीके" वा। अस्मादुलच्प्रत्ययो भवति[2]। हृष्यतीति **हर्षुलः** मृगः सूर्यः भृत्यनाम च। बाहुलकात् शङ्केरपीत्युक्तं भाष्ये[3]। तेन शङ्कुला ॥

---

॥ ९५ ॥ हृसृरुहियुषिभ्य इतिः ॥ १—९५ ॥

"हृञ् हरणे" "ऋ सृ गतौ" "रुह बीजजन्मनि"। युषिः सौत्रो धातुः। एभ्यः इतिर्प्रत्ययो[4] भवति[5]। इकारः तकारपरित्राणार्थः। हरतीति **हरित्** अश्वः वर्णः सूर्यः मृगश्च ॥ सरतीति[6] **सरित्** नदी ॥ रोहतीति **रोहित्** लता मृगः अग्निश्च ॥ **योषित्** वनिता[7] ॥

---

॥ ९६ ॥ [8]ताटेर्णिलुक् च ॥ १—९६ ॥

"तट आघाते" चौरादिकः। अस्मादितिप्रत्ययो भवति[9], तत्सन्नि-योगेन णेर्लुक् च[10]। लुग्वचनं प्रत्ययलक्षणेन वृद्धिर्मा भूदिति। ताटयतीति[11] **तादित्** विद्युत् बिन्दुश्च ॥

---

॥ ९७ ॥ षणेर्ढः ॥ १—९७ ॥

"षणु दाने" "वन षण संभक्तौ" वा। अस्मात् ढ भवति[12]। सनुत इति **षण्ढः** बलीवर्दः पुमांश्च। बाहुलकात् ष सकाराभावः ॥

---

1. B तुष्टौ.
2. B omits भवति.
3. A and B भाष्यते.
4. A इतिः.
5. B omits भवति.
6. B adds धावतीति.
7. B omits वनिता.
8. A and C तटेः.
9. B omits भवति.
10. B omits च.
11. B ताडय-
12. B omits भवति.

## ॥ ९८ ॥ कमेरठः ॥ १—९८ ॥

"कमु कान्तौ" अस्मादठप्रत्ययो भवति[1]। "कमेः णिङ्" नास्ति यदा, तदा अठप्रत्ययः। काम्यति कामयत इति वा[2] कमठः कच्छपः, तत्साम्यात्[3] स्त्रीणामुरस्युन्नतप्रदेशश्च। अङ्गसंज्ञानिमित्तस्य[4] ठस्येति विज्ञानात् इकादेशाभावः॥

## ॥ ९९ ॥ कलस्तृपश्च ॥ १—९९ ॥

"तृप प्रीणने" अस्मात् कलप्रत्ययो भवति। ककारः कित्कार्यार्थः। तृप्नोतीति तृपला[5] लताविशेषः॥ चकारात् कमेश्च। कमलम् पद्मम्[6]॥

## ॥ १०० ॥ शपेर्बश्च ॥ १—१०० ॥

"शप आक्रोशे" अस्मात् कलप्रत्ययः, बकारश्चान्तादेशः। शबलः श्वेत[7]वर्णः। अन्यवर्णैः बिन्दुभिश्च[8] युतः शबलः। तथा च निघण्टुः—

"बिन्दुभिः श्वेतवर्णोऽन्यैः शारं शबलकर्बुरा" इति॥

## ॥ १०१ ॥ वृषादिभ्यश्चित् ॥ १—१०१ ॥

"[10]वृष [11]वर्षे" "मृष सेचने" "तेवृ देवृ देवने" "केवृ रेवृ सेचने" एभ्यो वृषादिभ्यः कलप्रत्ययो भवति[12] चिच्च। वर्षति सिञ्चति पलण्डु-

१. B omits भवति.
२. A omits कमेः........इति वा.
३. B साधर्म्यात्.
४. B omits निमित्त-
५. B त्रिफला.
६. A adds अंप्रत्ययनिर्देशो वैचित्र्यार्थः. C adds प्रत्ययनिर्देशो वैचित्र्यार्थः.
७. B omits श्वेत........शबलः.
८. C बिन्दुभिश्रितः.
९. B शालः.
१०. B adds वृषादिभ्यः कलप्रत्ययः.
११. B वृषु मृषु.
१२. B omits भवति.

दिकमिति **वृषलः** पापीयान् बहिष्कृतश्च ॥ देवत इति देवलः ऋषिविशेषः। स हि ज्ञानेन दीव्यति। केवते असहायः सन् सेवत इति केवलः असहायः ॥

---

## ॥ १०२ ॥ मृजेष्टिलोपश्च ॥ १—१०२ ॥

"मृजूष् शुद्धौ" अस्मात् कलप्रत्ययः, धातोः टिलोपश्च। मृज्यते शोधनीयात् **मलं** पापम् ॥

---

## ॥ १०३ ॥ चुपेरच्चोपधायाः ॥ १—१०३ ॥

कलप्रत्ययोऽनुवर्तते। "चुप मन्दायां गतौ" अस्मात् कलप्रत्ययः, उपधाया अकारश्च। चोपयतीति **चपलः** चञ्चलः। "चप सान्त्वने" इत्यस्मादेव कलप्रत्ययेन रूपे सिद्धे[1] अकारविधानं विस्पष्टार्थम् ॥

---

## ॥ १०४ ॥ शकिशम्योर्नित् ॥ १—१०४ ॥

"शकॢ शक्तौ" "शम उपशमने" आभ्यां कलप्रत्ययो नित्च भवति[2]। नित्वात् प्रत्ययान्तं पदमाद्युदात्तं भवति[3]। शक्यत इति **शकलं** भित्तम्[4] ॥ शाम्यत्यस्मिन्निति **शमलम्** अशुचिद्रव्यम् ॥

---

## ॥ १०५ ॥ भ्रमिमस्योरुच्चोपधायाः ॥ १—१०५ ॥

"भ्रमु अनवस्थाने" "मस परिणामे" आभ्यां कलप्रत्ययः, उपधाया उच्च। **भ्रुमलम्** अक्षिरोगः ॥ **मुसलं** धान्यक्षोदकम्[5] ॥

---

१. B सिद्धे रूपे.

२. B omits भवति.

३. B omits भवति.

४. B omits भित्तम्.
A and C भिन्नम्.

५. A and C omit this sūtra and the commentary.

## ॥ १०६ ॥ कणेष्ठः ॥ १—१०६ ॥

"कण रण" इति शब्दार्थः[1] दण्डके पठितः। अस्मात् ठप्रत्ययो भवति[2]। ईकादेशो बहुलवचनात् न भवति। कण्यते शब्द्यते अनेनेति कण्ठः ग्रीवा[4] ॥

---

## ॥ १०७ ॥ ञमन्ताड्डः ॥ १—१०७ ॥

ञमः[5]—ञमङणनाः, तेषां ञमिति प्रत्याहारः, यथा "यमिः ञमन्तेषु" इति। तदन्ताद्धातोः डप्रत्ययो भवति[6]। बाहुलकादित्संज्ञा न भवति डकारस्य। "दमु उपशमने" दम्यते अनेनेति दण्डो यष्टिः[8]।

दमो[9] दण्ड इति प्रोक्तः तात्स्थ्याद्दण्डो महीपतिः ॥

"दण्ड दण्डनिपातने" इति चौरादिकोऽपि। तस्मादचि एतदेव रूपं भवति। मनेर्डः[10] मण्डः पिच्छद्रव्यम्। दधिमण्डं[11] मस्तु। गमेर्डः[12] गण्डः कपोलप्रदेशः। रमेः[13] रण्डा, अस्यां रमन्ते दुर्जना इति। रण्डा[14] अभिसारिका। वणेः[15] वण्डः दुश्चर्मा। "चडि कोपे" चण्डः क्रूरः। बाहुलकादतोऽपि डः ॥

---

१. C -र्थेदण्डके.

२. B omits भवति.

३. A and C omit इका....भवति.

४. B omits ग्रीवा.

५. A and C omit ञमन्तः

६. B omits भवति.

७. A and C omit root and meaning.

८. B omits यष्टिः.

९. B omits दमो दण्डः.

१०. A omits मनेर्डः मण्डः. B. "मन ज्ञाने" मण्डः.

११. A and C add मण्डो.

१२. B "गम्लृ गतौ" गण्डः.

१३. B "रमु क्रीडायाम्"

१४. A and C omit रण्डा.

१५. B वणतिः शब्दार्थः.

## ॥ १०८ ॥ कुणादिभ्यः कित् ॥ १—१०८ ॥

"कुण शब्दोपकरणे" एवमादिभ्यः डप्रत्ययो भवति किच्च । **कुण्डं** भाजनविशेषः । "यस्य दर्भकुण्डम्" इति प्रयोगः ॥ खनेः[1] **खण्डः** । "खड खडि भेदने" चौरादिकौ । खण्डयतेरचि खण्डमित्यपि भवति । अपरे "कादिभ्यः कित्" इति सूत्रमधीयते । कवर्गादिस्य इत्यर्थः । तान्येवोदाहरणानि ॥

---

## ॥ १०९ ॥ स्थाचतिमृजेरालज्वालञालीयरः ॥ १—१०९ ॥

"ष्ठा गतिनिवृत्तौ" "चते चदे[2] याचने" "मृजूष् शुद्धौ" एभ्यः यथासङ्ख्यं आलच् वालञ् आलीयर् इत्येते प्रत्यया भवन्ति । तिष्ठन्ति भुञ्जतेऽस्मिन्निति **स्थालम्** भाजनविशेषः ॥ **चात्वालम्** अवटविशेषः ॥ मृजेः वृद्धिः । **मार्जालीयम्** कायशोधनम् । एतौ छान्दसावित्याहुः ॥

---

## ॥ ११० ॥ पतिचण्डिभ्यामालञ् ॥ १—११० ॥

"शल हुल पतॢ गतौ" "चडि कोपे" आभ्यामालञ्प्रत्ययो भवति[3] । पतन्त्यस्मिन् इति **पातालम्** ॥ चण्डयतीति **चाण्डालः**[4] क्रूरकर्मा ॥

---

## ॥ १११ ॥ पतेरङ्गच् पक्षिणि ॥ १—१११ ॥

"पतॢ[5] गतौ" तस्मात् अङ्गच्प्रत्ययो भवति[6] पक्षिण्यभिधेये । पततीति **पतङ्गः** पक्षी । पक्षिग्रहणमनर्थकम्, सूर्येऽपि दर्शनात्; अपि च उणादिष्वर्थनिर्देशस्य अतीव प्रयोजनं नास्तीत्युक्तम्, रूढित एवार्थनिश्चयात् इति ॥

---

१. B "खन खनने" खण्डम्.
२. A and C omit चदे.
३. B omits भवति.
४. A and C चण्डालः.
५. A and C पतेरङ्गच्-
६. B omits भवति.

॥ ११२ ॥ सर्तेर्णित् ॥ १—११२ ॥

सर्तेः अङ्गच्प्रत्ययो भवति[1], णिच्च[2] । णित्वात् वृद्धिः । **सारङ्गः** मृगविशेषः । शबलवर्णश्च नानागच्छतीति ॥

---

॥ ११३ ॥ गन्गम्यदेः ॥ १—११३ ॥

“गमॢ गतौ” “अद भक्षणे” आभ्यां गन्प्रत्ययः[3] । गच्छतीति **गङ्गा** देवनदी ॥ अद्यत इति **अङ्गः** पुरोडाशः ॥

---

॥ ११४ ॥ भृञः किन्नुट् च ॥ १—११४ ॥

भृञो धातोः गन्प्रत्ययो भवति, किच्च । [4]प्रत्ययस्य नुडागमः । **भृङ्गः** पक्षी भ्रमरश्च ॥

---

॥ ११५ ॥ श्रृणातेः ह्रस्वश्च ॥ १—११५ ॥

श्रृणातेः गन्प्रत्ययः, धातोः ह्रस्वश्च । चकारात् प्रत्ययस्य नुडागमः[5] । **श्रृङ्गः**[6] विषाणम् ॥

---

॥ ११६ ॥ गण् शकुनौ ॥ १—११६ ॥

श्रृणातेः गण्प्रत्ययो भवति[7] शकुनावभिधेये । णित्वात् वृद्धिः । **शार्ङ्गः** पक्षी ॥

---

॥ ११७ ॥ मुदिग्रोः [8]गग्गौ ॥ १—११७ ॥

मोदतेः[9] गिरतेश्च गृणातेर्वा यथासंख्यं गत् ग इत्येतौ प्रत्ययौ भवतः ।

---

1. B omits भवति.
2. A and C omit णिच्च.
3. A and C गमेरादेश्च गन्प्रत्ययो भवति.
4. B omits भृञः........नुडागमः.
5. A धातोः नुडागमः.
6. B शृगविषाणम्.
7. B omits भवति.
8. B गग्गौ.
9. B “मुद हर्षे” “गॄ निगरणे” आभ्यां.

"गॄ[1]" इति धातुद्वये वर्तमानमेकमेव; तेन यथासङ्ख्यभावो[2] न चोदनीयः। मोदते अनेनेति मुद्गः धान्यविशेषः॥ [3]लोके गीयते शब्द्यते इति गर्गः ऋषिविशेषः विद्वांश्च॥

---

## ॥ ११८ ॥ अण्डन् कृसृभृवृञः ॥ १—११८ ॥

"[4]डुकृञ् करणे" "सृ गतौ" "भृञ् भरणे" "वृञ् आवरणे" एभ्य अण्डन्प्रत्ययो [5]भवति। करण्डः गृह्यभाजनम्॥ [6]सरतीति सरण्डः चतुष्पात्॥ भरण्डः क्रिमिजातिः॥ व्रियतेऽनेनेति वरण्डः काष्ठविशेषः मुखरोगश्च॥ प्राक्प्रत्ययनिर्देशादन्येषामपि। [7]जरण्डः, चमण्डः॥

---

## ॥ ११९ ॥ शॄदॄभसोऽदिः ॥ १—११९ ॥

"[8]शॄ हिंसायाम्" "दॄ विदारणे" "भस भर्त्सनदीप्त्योः" एभ्योऽदिप्रत्ययो [9]भवति। शृणाति कामुकानिति शरत् ऋतुविशेषः॥ दीर्यत इति दरत् जनपदविशेषः, यस्य जनपदशब्दात् क्षत्रियात् "द्व्यञ्मगध" इत्यण्। हृदयं व्याधिविशेषश्च॥ भसत् जघनम् मांसं [10]विष्ठाकोष्ठं च॥

---

## ॥ १२० ॥ दृणातेः षुक् ह्रस्वश्च ॥ १—१२० ॥

दृणातेः धातोः अदिप्रत्ययो [11]भवति, ह्रस्वः, षुगागमश्च[12] धातोः। दीर्यत इति दृषत् उपलम्॥

---

1. B adds निगरणे.
2. A -संख्यभावो.
3. B omits लोके.
4. A and C करोतेः सर्तेः भृञः वृञश्च.
5. B omits भवति.
6. B omits सरतीति.
7. B चरण्डः.
8. A and C शृणातेः.
9. B omits भवति.
10. B काष्ठात् काष्ठं च.
11. B omits भवति.
12. B omits च.

## ॥ १२१ ॥ एतेस्तुट् च ॥ १—१२१ ॥

"इण् गतौ" अस्मादद्प्रत्ययः । प्रत्ययस्य[1] नुडागमः, धातोर्गुणः । एतत् सर्वादि[2] ॥

## ॥ १२२ ॥ त्विषिमिषिभ्यां च ॥ १—१२२ ॥

"त्विष दीप्तौ" "मिष स्पर्धायाम्" आभ्यामद्प्रत्ययो भवति ।[4] त्वेषतीति[5] त्वेषत्[6] देवविशेषः ॥ मिषतीति मेषत् महिषजातिः ॥

## ॥ १२३ ॥ त्यजियजितनिभ्यो डित् ॥ १—१२३ ॥

"त्यज हानौ" "यज[7] देवपूजादौ" "तनु विस्तारे" एभ्य अदिप्रत्ययो भवति[8], डिच्च । डित्वविधानसामर्थ्यात् अभस्यापि टेर्लोपः । त्यत् प्रत्यक्षपरोक्षयोः ॥ यत् अनुवादविषये परोक्षे ॥ तत् परोक्षेऽर्थे[9] ॥

## ॥ १२४ ॥ सर्तेरटिः[10] ॥ १—१२४ ॥

"सृ[11] गतौ" अस्माद्धातोः अटिप्रत्ययो भवति[12] । सरतीति सरट् मेघः ॥

## ॥ १२५ ॥ लङ्घेर्नलोपश्च ॥ १—१२५ ॥

लघिः गत्यर्थः । लङ्घेरटिप्रत्ययो भवति[13], नलोपश्च । लङ्घत इति लघट्[14] अप्सरोविशेषः ॥

---

१. B omits root and meaning.
२. B तस्य.
३. B सर्वादिः.
४. B omits भवति.
५. A omits त्वेषति............डिच्च in the next sūtra.
६. B त्विषत्.
७. C यज तनि इत्येतेभ्यः.
८. B omits भवति.
९. A and C परोक्षार्थे.
१०. A and C सर्तेरटिप्रत्ययः.
११. B omits भवति.
१२. B omits भवति.
१३. B लङ्घट्.
१४. B omits भवति.

## ॥ १२६ ॥ पारेरजिः ॥ १—१२६ ॥

"पार तीर कर्मसमाप्तौ" अस्मादजिप्रत्ययो भवति[1] । पारयतीति **पारक्** सर्पिः पक्वं रक्तवर्णश्च ॥

---

## ॥१२७॥ अर्तिस्तुसुहुसृधृक्षिक्षुभायापदियक्षिनीभ्यो मन् ॥१—१२७॥

"ऋ गतौ" "ष्टुञ् स्तुतौ" "षुञ् अभिषवे"। "अभिषवः स्नानम्, पीडनम्, मन्थनम्, स्नापनं वा" इति धातुपारायणे अभिषवशब्दस्यार्थ[3] आख्यातः[4]। "हु दाने" "सृ गतौ" "धृङ् अवस्थाने"[5] "क्षि क्षये" "क्षि निवासगत्योः" वा[6]। "टु क्षु शब्दे" "भा दीप्तौ" "या प्रापणे" "पद गतौ" "यक्ष पूजायाम्" "णीञ् प्रापणे" एभ्यो मन्प्रत्ययो भवति। नकारः स्वरार्थः। ऋच्छतीति **अर्मः** अक्षिरोगः ॥ स्तूयत इति **स्तोमः** सङ्घातः। सङ्घातमात्रे निघण्टुः। यज्ञविशेषश्च ॥ सूयतेऽनेनेति **सोमः** चन्द्रः ॥ हूयतेऽनेनेति **होमः** आहुतिः॥ सरतीति **सर्म** सुखम्॥ ध्रियते दधातीति[7] **धर्मः** पुण्यम् ॥ क्षीयते अनेनेति **क्षेमः** कुशलम् ॥ **क्षोमः** वस्त्रजातिः। क्षुमासूत्रनिर्मिते क्षोमशब्दः साधुः ॥ भातीति **भामः** आदित्यः ॥ यातीति **यामः** प्रहरः ॥ पद्यत इति **पद्मं** कमलम् ॥ **यक्ष्मः** मुखरोगः[8] ॥ नीयत इति **नेमः** रथवर्त्म । सर्वादिश्च ॥

---

## ॥ १२८ ॥ अवतेष्टिलोपश्च ॥ १—१२८ ॥

"अव" रक्षणादिषु । अवतेर्धातोः मन्प्रत्ययः[9]। टिलोपवचनसामर्थ्यात्[10]

---

1. B omits भवति.
2. B -यात्रापदि-
3. A omits शब्द.
4. B आख्यार्थतः.
5. A and C "धृञ् अस्थाने."
6. A omits वा.
7. B omits दधातीति.....निर्मिते.
8. B -गम्.
9. A adds टिलोपश्च.
10. A विधान.

प्रत्ययाकारस्य लोपः। "ज्वरत्वर" इत्यूठ्, गुणः। अवतीति[1] ओम् चादिः।

"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥"

---

॥ १२९ ॥ ग्रसतेरा च ॥ १—१२९ ॥

"ग्रसु ग्लसु अदने" अस्मात् मन्प्रत्ययो भवति, धातोराकार अन्तादेशश्च[5]। ग्रसत इति ग्रामः।

"ग्रामः परिवृतो वृत्त्या चतुर्भिर्गोपुरैः पुरम्"

इति सज्जनः। चतुर्वर्णविलासो ग्राम इति केचन॥

---

॥ १३० ॥ अविसिविशुषिभ्यः कित् ॥ १—१३० ॥

"अवँ रक्षणे" "षिवु तन्तुसन्ताने" "शुष शोषणे" एभ्यो मन्प्रत्ययः किच्च। कित्वाद्गुणाभावः। अवतीति ऊमः देवः नभः उडुपतिश्च॥ सिवेर्मन्-प्रत्यये[9] "च्छ्वोः शूठ्" इति ऊठि यणादेशः। स्यूमाः रश्मयः जलं च॥ शुष्यतीति शुष्मा[10] सविता ज्वाला जलं च॥

---

॥ १३१ ॥ इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥ १—१३१ ॥

"इष गतौ" "इष अभीक्ष्ण्ये" "इषु इच्छायाम्" वा। "युध संप्रहारे" "ञि इन्धी दीप्तौ" "दसु उपक्षये" "श्यैङ् गतौ" "धूञ्

---

१. B adds गुणः.
२. B omits ओम्। चादिः।
३. B ओमःथश्चा-
४. B omits भवति.
५. B -राकारादेशश्च.
६. C omits इति.
७. A and C अवतेः.
८. B omits अवतीति.
९. B -प्रत्ययः.
१०. B शुष्कः.
११. B दसु च.
C दसि.

कम्पने" "षू प्रेरणे" "षूङ् प्राणिगर्भविमोचनयोः" वा[1]। एभ्यो मक्प्रत्ययो भवति[2]। कित्वात् गुणाभावः। इष्यत इति इष्मः वसन्तः॥ युध्यन्ते[3] अस्मिन्निति युध्मः शरः॥ इन्धेर्नलोपश्च। इध्मम् काष्ठम्, इध्यते अनेनेति कृत्वा॥ दस्यत्युपक्षयं करोति द्रव्यस्य दक्षिणादिना इति दस्मः यजमानः॥ श्यायत इति श्यामः वर्णविशेषः। श्यामा यौवनमध्यस्था च॥ धुनोत्यु-द्गच्छतीति धूमः[4]॥ सूयत इति[5] सूमः अन्तरिक्षम्॥ बाहुलकात् ईर्म[6] व्रणः॥

---

## ॥ १३२ ॥ युजिरुचितिजां[7] कुत्वं च ॥ १—१३२ ॥

"युजिर्[8] योगे" "रुच दीप्तौ" "तिज निशाने" एभ्यो मक्प्रत्ययः। एषां कुत्वं च भवति। युनक्तीति[9] युग्मम्॥ [10]रोचत इति रुक्मं सुवर्णम्॥ तेजयतीति तिग्मम् तीव्रम्॥

---

## ॥ १३३ ॥ हन्तेर्हि च ॥ १—१३३ ॥

"हन हिंसागत्योः" अस्मात् मक्[11]प्रत्ययो भवति[12], धातोः हि इत्ययमादे-शश्च[13]। हन्तीति हिमं तुषारम्॥

---

१. A omits वा.

२. B omits भवति.

३. A युध्यते.

४. A There is a lacunae in the ms. after धूमः up to the beginning of the next sūtra.

५. B अग्निलिङ्गकः क्षरिमन्तरिक्षे च. C स्नुमः अन्तरिक्षम्ः.

६. A and B omit this sentence

७. B कुश्च.

८. A and C There is a lacunae up to इति युग्मम्.

९. C omits इति युग्मम् also.

१०. A omits रोचते....सुवर्णम्.

११. A मन्प्र-

१२. B omits भवति.

१३. A and C omit च.

## ॥ १३४ ॥ भियष्षुग्वा ॥ १—१३४ ॥

"ञि भी भये" अस्मान्मक्[1]प्रत्ययः । तत्सन्नियोगेन वा षुगागमः । भीमः भीष्मः भयानकः[2] । "भीमादयोऽपादाने" इत्यपादाने प्रत्ययः ॥

---

## ॥ १३५ ॥ [3]घर्मः ग्रीष्मः ॥ १—१३५ ॥

[4]घर्मः ग्रीष्मः इत्येतौ शब्दौ निपात्येते । "घृ क्षरणदीप्त्योः" अस्मान्[5]मक्, गुणः । जिघर्ति दीप्यतेऽस्मिन्निति घर्मः निदाघः । गिरतेरी-कारः[6] षुगागमश्च । गिरतीति ग्रीष्मः ऋतुविशेषः ॥

---

## ॥ १३६ ॥ प्रथेष्षिवन् [7]संप्रसारणं च ॥ १—१३६ ॥

"प्रथ प्रख्याने" अस्मात् षिवन्[8]प्रत्ययो भवति, [9]संप्रसारणं च । रेफस्य ऋकारः । प्रथते विस्तारमुपयातीति पृथिवी [10]मही । षित्वात् ङीष् ॥

---

## ॥ १३७ ॥ अशुप्रुषिलटि[11]कणिखटिविशिभ्यः क्वन् ॥ १—१३७ ॥

"अशू व्याप्तौ" "प्रुष [12]प्लुष दाहे" "लट बाल्ये च" "कण निमीलने" । कणतिः शब्दार्थश्च । "खट काङ्क्ष्ये" "विश प्रवेशने"

---

1. A मनूप्र-
2. A omits भयानकः.
3. B घर्मग्रीष्मगुल्माः.
4. B घर्मग्रीष्मगुल्मा इत्येते शब्दाः निपात्यन्ते.
5. A मन्.
6. A ईगागमः.
7. A and B संप्रसारणम्.
8. B omits प्रत्ययो भवति.
9. A and C संप्र.
10. B omits मही.
11. A खटिकणि.
12. A omits प्लुष.

एभ्यः क्वन्प्रत्ययो भवति[1] । नकारः स्वरार्थः । ककारः कित्कार्यार्थः[2] । अश्नुते गन्तव्यमाशु[3] व्याप्नोतीति **अश्वः** वाजी ॥ प्रुष्णातीति **प्रुष्वः**[4] ऋतुः वर्षं च ॥ लटतीति **लट्वः** पक्षी ॥ कणतीति **कण्वः** ऋषिविशेषः[5] पापं मनश्च ॥ खटयते काङ्क्ष्यते इति **खट्वा** शयनीयम् ॥ विशतीति **विश्वं** सर्वम् ॥

---

## ॥ १३८ ॥ इण्शीभ्यां वन् ॥ १—१३८ ॥

"इण् गतौ" "शीङ् स्वप्ने"[6] आभ्यां वन्प्रत्ययो भवति[7] । ईयते अनेन अर्थ इति **एव** अवधारणवाचिनिपातः । अव्ययत्वात् सुब्लुक् ॥ शेत इति **शेवः** मेढ्रम् ॥

---

## ॥ १३९ ॥ सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे ॥ १—१३९ ॥

अतन्त्रे अप्रधाने परतन्त्रे । एषां[8] वाच्यस्यान्यं प्रति गुणत्त्वे इत्यर्थः । एते सर्वादयो वन्प्रत्ययान्ता निपात्यन्ते । सर्तेर्वन्, अन्तोदात्तत्वं च निपात्यते । **सर्वः** विश्वम्[9] ॥ "घृषु संघर्षे" निपूर्वः । अस्माद्वन्प्रत्ययः गुणाभावश्च । **निघृष्वः** निकषपाषाणम् क्षुरमार्गो वा ॥ [10]"ऋ गतौ" अतो वन्प्रत्ययः, गुणाभावश्च[11] । षुक् । **ऋष्वः** हिंस्रः ॥ "लष कान्तौ" अस्माद्वन् । **लष्वः**[12] अङ्गनर्तकः पांशश्च[13] ॥ [14]"शीङ् स्वप्ने" अस्माद्वन्, ह्रस्वत्वम् । शेतेऽस्मिन्

---

1. B omits भवति.
2. A कित्कार्यार्थः ककारः.
3. B गन्तुं.
4. B प्रुष्वा.
5. B omits विशेषः.
6. A and C इणः शीङश्च.
7. B omits भवति.
8. B एकेषां.
9. B omits सर्वः विश्वम्.
10. A and C. ऋतेर्गत्यर्थात् वन्.
11. B omits च.
12. B लष्वा.
13. A and B वंशश्च.
14. A and C शीङो ह्रस्वत्वम्.

प्राप्ते सुखमिति शिवं क्षेमः॥ "पद्लृ गतौ" अस्माद्वन्प्रत्ययः। पदतेऽस्मिन्निति पद्वः[1] भूर्लोकः[2]॥ "ह्वेञ् स्पर्धायाम्" प्रपूर्वादस्माद्वन्[3], आकारलोपश्च। प्रह्वः प्रणतः। "आतोऽनुपसर्गे कः"[4] इति कप्रत्ययेनैव सिद्धे रूपे प्रपञ्चार्थं ग्रहणम्॥ "इषु इच्छायाम्" अस्माद्वन्[5] गुणाभावश्च। इष्वः आचार्यः गृहपतिः यजमानः[6] योद्धा च। अतन्त्र इति किम्? सती सारकः। उणादिष्वर्थनिर्देशस्य प्रयोजनं प्रायिकमेव[7]। प्रायिकं[8] चातन्त्रग्रहणम्, शिव-शब्देन स्वतन्त्रस्येश्वरस्याप्युपादानात्॥

---

## ॥ १४० ॥ शेवायह्वाजिह्वाग्रीवाप्वामीवाः[9]॥ १—१४०॥

शेवादयो निपात्यन्ते। स्त्रीलिङ्गानां ग्रहणमन्यलिङ्गानां माभूदिति[10]। "[11]शीङ् स्वप्ने" अस्माद्वन्। शेवा मेढ्रम् लिङ्गाकृतिर्वा॥ "या प्रापणे" अस्माद्वन् हुक् चागमः। यातीति यह्वा[12] बुद्धिः॥ "जीव[13] प्राणधारणे" अस्माद्वन्। वकारस्य हकारः ह्रस्वत्वं च। जिह्वा रसज्ञा[14]॥ "गॄ[15] निगरणे" अस्माद्वन्। रीङादेशः। गीर्यतेऽनेनेति ग्रीवा कण्ठः॥ "आप्लृ[16] व्याप्तौ" अस्माद्वन् ह्रस्वत्वम्। [17]अप्वा स एव कण्ठः॥ "मीञ्[18] हिंसायाम्" नञ्पूर्वादस्माद्वन्। अमीवा मनः उदकं च॥

---

१. A and C पदेर्वन्.
२. B omits भूर्लोकः.
३. A and C प्रपूर्वात् ह्वयतेर्वन्.
४. B "आतश्चोपसर्गे".
५. A and C इषेर्वन्.
६. B यज्वा.
७. B प्रातिपदिकमेव.
८. B omits प्रायिकं.
९. B शेवयह्व-
१०. B and C omit इति.
११. A and C शीङो वन्.
१२. A and C यातेरत्वम्.
१३. A and C जीवेः वकारस्य
१४. A and C तालु.
१५. A and C गिरतेः ईङा-
१६. A and C आप्नोतेः ह्रस्वत्वं च.
१७. A omits अप्वा.
१८. A and C नञ्पूर्वात् मीञः अमीवा.

॥ १४१ ॥ कॄगॄशॄदॄभ्यो वः ॥ १—१४१ ॥

"कॄ विक्षेपे" "गॄ निगरणे" "शॄ हिंसायाम्" "दॄ विदारणे"[1] एभ्यो वप्रत्ययो भवति। किरतीति कर्वः कन्दरः[2] ॥ गिरतीति गर्वः दर्पः ॥ शृणातीति शर्वः परमेष्ठी ॥ दृणातीति दर्वः राक्षसः कन्या च ॥

---

॥ १४२ ॥ कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ॥ १—१४२ ॥

"यु मिश्रणे" "पृषु वृषु सेचने" "तक्षू त्वक्षू तनूकरणे" "तक्ष त्वचने" वा। "राजृ दीप्तौ" "धन्विः" सौत्रो धातुः। "द्यु अभिगमने" "दिवु" क्रीडादौ प्रतिपूर्वः। एभ्यः कनिन्प्रत्ययो भवति[3]। नकारः स्वरार्थः। ककारः कित्कार्यार्थः। यौतीति युवा तरुणः[4] ॥ वर्षतीति वृषा[5] प्रभुः ॥ तक्ष्णोतीति तक्षा रथकारः ॥ [6]राजत इति राजा प्रतीतः ॥ धन्वा [7]निर्जलप्रदेशः ॥ द्युवा अभिगन्ता ॥ प्रतिदिवा अहः ॥

---

॥ १४३ ॥ सप्यशूभ्यां तुट् च ॥ १—१४३ ॥

"षप समावाये" "अशू व्याप्तौ"[8] आभ्यां कनिन्प्रत्ययः, तुडागमश्च प्रत्ययस्य। सप्तन् ॥ अष्टन् ॥

---

॥ १४४ ॥ नुदंशोर्गुणश्च ॥ १—१४४ ॥

"णु स्तवने" "दंश दंशने" आभ्यां कनिन्प्रत्ययः, नौतेर्गुणश्च। नवन् ॥ दशन् ॥

---

१. A and C omit कॄ....विदारणे.
२. B कन्दर्पः.
३. B omits भवति.
४. B omits तरुणः.
५. B वृषः.
६. A and C omit राजत इति.
७. B अरन्नः जलप्रदेशः.
८. A and C omit व्याप्तौ.

## ॥ १४५ ॥ सहेः षष् लुक् च ॥ १—१४५ ॥

"षह मर्षणे" कनिन्प्रत्ययस्य लोपः। षगादेशश्च। धातोः षष् भवति। षट्। पृषोदरादित्वात् इत्याह ॥[1]

---

## ॥ १४६ ॥ श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्-अर्यमन्विश्वप्सन्परिज्मन्[2]मातरिश्वन्मघवन् ॥ १—१४६ ॥

श्वन्नित्यादयः कनिन्प्रत्ययान्ता निपात्यन्ते। यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम्। शब्दरूपाभिव्यक्तये विभक्तिर्नोत्पद्यते। "शो[3] तनूकरणे" "टु ओ श्वि गतिवृद्ध्योः" वा। कनिन्। यदा श्यतेः तदा वुगागमः, यदा श्वयतेः तदा इकारलोपः। श्वा कुक्कुरः ॥ "उक्ष सेचने" कनिन्प्रत्ययः। उक्षति सिञ्चतीति उक्षा बलीवर्दः ॥ "पुष[4] पुष्टौ" दीर्घत्वं कनिन्प्रत्ययः। पोषयतीति पूषा पतङ्गः ॥ प्लीहेर्गत्यर्थात् कनिन्। प्लीहा[5] व्याधिविशेषः ॥ "क्लिदू आर्द्रीभावे" गुणश्च निपात्यते। क्लेदा[6] क्रोधः ॥ "ष्णिह उद्गिरणे" गुणश्च। स्नेहा[7] व्याधिविशेषः ॥ "मुह वैचित्ये" कनिन्। उपधाया दीर्घत्वं च। धकारश्चान्तादेशः। अन्त्यात् पूर्वो रेफश्च। मूर्धा शिरः[8] ॥ "टु मस्जो शुद्धौ" कनिन्। मज्जा[9] [10]अस्थिसारः[11] ॥ [12]"माङ् माने" अर्यपूर्वात् कनिन्। अकारलोपो निपात्यते। अर्यमा आदित्यः ॥ "प्सा भक्षणे" विश्व[13]पूर्वात् कनिन्। विश्वप्सा विश्व[14]कर्मा अ[15]ग्निश्च ॥ "ज्वर रोगे"

---

१. B omits भवति........इत्याह.
२. A and C परिज्वन्.
३. A and C श्यतेः श्वयतेर्वा.
४. A and C पुषेः.
५. A and C प्लीहाख्य-
६. A क्लेमा.
७. A स्नेहो.
८. B omits शिरः.
९. B मस्जेः.
१०. B adds "झलां जश् झशि" इति जश्त्वम्। सकारस्य दकारः। श्चुत्वम्। दकारस्य जकारः।
११. A and C सारः.
१२. A and C अर्यपूर्वान्माङः अर्यमा.
१३. A and C विश्वपूर्वः विश्वप्सा.
१४. A omits विश्वकर्मा.
१५. A and C omit अग्निश्च.

परिपूर्वः । ज्मादेशः कनिन्प्रत्ययश्च[1] । **परिज्मा** चन्द्रः । छान्दसमेतन्नामेत्याहुः ॥ मातरिपूर्वात् श्वयतेः टिलोपः, विभक्तेरलुक् च । **मातरिश्वा** वायुः ॥ "मंह पूजायाम्" अस्माद्घकारादेशो भवति वुगागमश्च[2] । मह्यत इति **मघवा** इन्द्रः । अथ वा "मघि कैतवे" अस्य वुगागमः । मङ्घते कैतवमाचरत्यहल्यादिषु इति मघवा इन्द्रः । मघमस्यास्तीति "छन्दसीवनिपौ" इति वनिपि मघवन्निति व्युत्पादयन्ति केचित्; तच्छान्दसम् । भाषायामपि[3] कनिन्प्रत्ययस्य साधुत्वार्थं व्युत्पादनम् । ननु अस्यां व्युत्पत्तौ अवग्रहो न प्राप्नोति मघवन्निति । नैष दोषः । न हि लक्षणकारैः पदकारा अनुवर्त्याः[4], पदकारैर्नाम लक्षणमनुवर्त्यम् । अविभक्तिनिर्देशोऽपरिसमाप्तत्वज्ञापनाय । तेन पञ्चन्नित्यादयः सिद्ध्यन्ति ॥

इतीन्दुग्रामसमीपवर्त्यग्रहारवास्तव्येन उत्तरमेर्वभिजनेन धर्मशास्त्रपारगार्यभट्टसूनुना गार्ग्येण श्वेतवनवासिनाम्ना विरचितायामुणादिवृत्तौ प्रथमः पादः



---

१. B प्रत्ययो भवति.

२. A and C महेर्घकारो वुगागमश्च.

३. B omits भाषायामपि.

४. A अनुसर्तव्याः.

## ॥ अथ द्वितोयः पादः ॥

---

### ॥ १४७ ॥ कृहृभ्यामेणुः ॥ २—१ ॥

"डु कृञ् करणे" "हृञ् हरणे" आभ्यां धातुभ्यां एणुप्रत्ययो भवति।[1] करोतीति **करेणुः** हस्तिनी[2] ॥ हरतीति **हरेणुः**[3] गन्धद्रव्यम् ॥

---

### ॥ १४८ ॥ हनिकुषिनीरमिकाशिभ्यः क्थन् ॥ २—२ ॥

"हन हिंसागत्योः" "कुष निष्कर्षे" "णीञ् प्रापणे" "रमु क्रीडायाम्" "काशृ दीप्तौ" एभ्यः क्थन्प्रत्ययो भवति। नकारः स्वरार्थः। ककारः कित्कार्यार्थः[4]। हन्यत इति **हथः** विषण्णः ॥ कुष्णाति पुरुषमिति[5] **कुष्ठं** त्वग्विकारः ॥ शोभनं नयतीति **सुनीथः** धर्मशीलः ब्राह्मणश्च[6] ॥ रम्यतेऽनेनेति[7] **रथः** स्यन्दनम् ॥ काशते दीप्यतेऽग्नौ[8] क्षिप्तमिति **काष्ठम्** इन्धनम्। अथ वा कषेः क्थन्प्रत्ययः ॥

---

### ॥ १४९ ॥ अवे भृञः ॥ २—३ ॥

"भृञ् भरणे"[9] अव उपपदे अस्मात्[10] क्थन्प्रत्ययो भवति। समाप्नोत्यनेनेति **अवभृथः** यज्ञावसानम्। थाथादिसूत्रेण अवभृथशब्दोऽन्तोदात्तः ॥

---

1. A and C करोतेः हरतेश्च एणु-
2. B omits हस्तिनी
3. B adds हस्तिनी.
4. B गुणवृद्धिप्रतिषेधार्थः.
5. B पुरुषतीति.
6. A omits च.
7. B omits अनेनेति.
8. B निक्षिप्त-
9. A and C omit root and meaning.
10. A and C भृञः.

## ॥ १५० ॥ उषिकुषिगार्तिभ्यस्थन् ॥ २—४ ॥

"उष दाहे" "कुष निष्कर्षणे"। गामादाग्रहणेष्वविशेषात्[1] गारूपाणां ग्रहणम्। "ऋ गतौ" एभ्यस्थन्प्रत्ययो भवति। उष्यते दह्यते मुखवायुनेति **ओष्ठः** प्रसिद्धः॥ कुष्णाति निष्कर्षति सर्वमिति **कोष्ठम्** उदरं कुसूलश्च॥ गीयत इति **गाथा** काव्यप्रबन्धः॥ अर्यते प्राप्यत इति **अर्थ** धनमभिधेयं च॥

---

## ॥ १५१ ॥ जॄवृञ्भ्यामूथन्[2] ॥ २—५ ॥

"जॄ वयोहानौ" "वृञ् वरणे" आभ्यामूथन्प्रत्ययो भवति। जीर्यत इति **जरूथ** मांसम्। वृणोत्यनेनेति **वरूथं** रथगोपनं बलसङ्घातश्च॥

---

## ॥ १५२ ॥ पातॄतुदिवचिसिचिरिचिभ्यस्थक्[3] ॥ २—६ ॥

"पीं पाने" "तॄं[4,5] प्लवनतरणयोः" "तुद व्यथने" "वच परिभाषणे[6]" "षिचिर् क्षरणे[7]" "रिचिर् विरेचने" एभ्यस्थक्प्रत्ययो भवति। पीयत इति **पीथं** जलम्[8]॥ तीर्यतेऽनेनेति **तीर्थं** पुण्यं गुरुश्च॥ तुद्यतेऽनेनेति[9] **तुत्थः** अग्निः औषधो वा॥ उच्यत इति **उक्थं** सामविशेषः। "[10]वचिस्वपि" इत्यादिना संप्रसारणम्। उक्थं सर्वदेवसङ्घात इति केचित्॥ सिच्यतेऽनेनेति **सिक्थम्** ओदनविकारः॥ रिच्यतेऽनेनेति **रिक्थ** धनम्॥

---

1. B पिशेषाङ्क.
2. A and C जूत्रञः.
3. B -रिचिसिचि-
4,5 A and C omit root and meaning.
6,7 A and C omit the meaning of the root.
8. B बलम्.
9. A and B तुदत्यनेन.
10. B यजादित्वात्.

## ॥ १५३ ॥ अर्तेर्निरि ॥ १—७ ॥

निर्युपपदे अर्तेस्थक्प्रत्ययो भवति । नितरामृच्छतीति **निर्ऋथः** पशूनां सङ्घातः ॥

---

## ॥ १५४ ॥ सर्तेर्णिच्च ॥ २—८ ॥

सर्तेस्थक्प्रत्ययो णिच्च । णित्वात् वृद्धिः । सरतीति **सार्थः** गच्छतां संघातः ॥

---

## ॥ १५५ ॥ निशीथगोपीथावगथाः[१] ॥ २—९ ॥

निशीथादयः थक्प्रत्ययान्ता निपात्यन्ते । निपूर्वात् शीङस्थक् । नितरां शय्यते[२] सुप्यतेऽस्मिन्निति[३] **निशीथः** मध्यरात्रः ॥ गोपूर्वात् पिबतेस्थक् । गावः पिबन्त्यस्मिन्निति **गोपीथः** तीर्थः प्रत्यूषश्च[४] ॥ गत्यर्थात् गाङ अवपूर्वात्[५] थक् ह्रस्वत्वं च । गम्य[गीय]तेऽनेनेति **अवगथः** पन्थाः प्रातस्सवनं च ॥

---

## ॥ १५६ ॥ गश्चोदि ॥ २—१० ॥

उदि उपपदे "गाङ् गाने" इत्यस्मात् थक्प्रत्ययो भवति । **उद्गीथः** सामविशेषः ॥

---

## ॥ १५७ ॥ समीणः ॥ २—११ ॥

"ईण् गतौ" सम्युपपदे इणस्थक् । समन्तादेत्ययमिति **समिथः** अग्निः ॥

---

१. A अपगाथाः.

२. B शय्यन्ते. C शेरते

३. B and C सुप्यन्ते.

४. B प्रत्यूहश्च.

५. A अप-

६. A and C omit root and meaning.

॥ १५८ ॥ तिथकुथपृष्ठगूथयूथप्रोथाः ॥ २—१२ ॥

तिथादयः थक्प्रत्ययान्ता निपात्यन्ते। "तिज निशाने" जकारलोपः। तेजयतीति **तिथः** दिवसः॥ कवतेस्थक्। **कु[2]थः** विस्[3]तारिका॥ [4]पृषेस्थक्। **पृष्ठः** पश्चाद्भागः अहःपर्यायः। रथन्तरादिसामवचन इत्येके[5]॥ "गु पुरीषोत्सर्गे" दीर्घत्वम्[6]। गूयते उत्सृज्यत इति **गूथः** अशुचिद्रव्यम्॥ यौतेस्थक्। यूयते मिश्रीक्रियेत[7] इति **यूथः**। दीर्घत्वम्। तिरश्चां संहतिः॥ "[8]प्रुष प्लुष दाहे" अन्तलोपो गुणश्च[9]। **प्रोथः** समुद्रतरङ्गः नासिकाविवरस्याधस्तात्प्रदेशः॥

---

॥ १५९ ॥ स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्त्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसि[10]दम्भिवसि[11]वाशिशीङ्हसिसिधिशुभिभ्यो रक् ॥ २—१३ ॥

"स्फायी ओ प्यायी वृद्धौ" "तञ्चु सङ्कोचने" "वञ्चु प्रलम्भने" "शकॢ शक्तौ" "क्षिप प्रेरणे" "क्षुदिर् संपेषणे" "गमॢ सृपॢ गतौ" "तृप प्रीणने" "दृप हर्षविमोचनयोः" "वदि अभिवादनस्तुत्योः" "उन्दी क्लेदने" "[12]श्विता वर्णे" "वृतु वर्तने" "अज गतिक्षेपणयोः" "णीञ् प्रापणे" "पद गतौ" "मदी हर्षे" "मुद हर्षे" "खिद दैन्ये" "छिदिर्

---

१. B omits -गूथ-
२. A कवथः.
३. A विस्तारिता.
४. B पक्षे स्थक्.
५. B उच्यते.
६. B दीर्घम्.
७. B मिश्रीयते.
८. A and C प्रुषेः.
९. B गुणत्वम्.
१०. A and C दम्भि.
११. A omits वसि.
१२. B adds "पद गतौ" "मदी हर्षे."
१३. A जि श्विता.

द्वैधीकरणे " "[1]भिदिर् विदारणे" "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" "चदि आह्लादने" "दह भस्मीकरणे" "दसु" च "दम्भु दम्भे" "वस निवासे" "वाश्र शब्दे" "शीङ् स्वप्ने" "हसे हसने" "षिध गत्याम्" "शुभ शुम्भ शोभार्थे" एभ्यो रक्प्रत्ययो भवति । स्फायते वृद्धिं गच्छतीति **स्फारः** समुद्रः सङ्घातश्च । "वि[2]स्फारस्फारनिस्वनैः" इति वृद्धिमात्रे ॥ तनक्ति संकोचमुपयात्यनेनेति **तक्रम्** ।

"तक्रम् ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्"

इति निघण्टुः ॥ वञ्चतेः "अनिदिताम्" इति नलोपः । **वक्रम्** कुटिलम् ॥ शक्नोति शत्रूनभिभवितुं इति **शक्रः** इन्द्रः ॥ क्षिपतीति **क्षिप्रः** शीघ्रकारी ॥ [3]क्षोत्तुं शक्यत इति शक्यार्थे रक् । **क्षुद्रः** दीनः हिंसकश्च । "क्षुद्रजन्तवः" इत्यत्र भाष्यम् "अथ वा क्षोत्तुं शक्यते" इति [4]॥ सर्पति गच्छति इति **सृप्रा**[5] नदीविशेषः बुद्धिविशेषश्च[6] ॥ तृप्नोति अनेनेति **तृप्रः** पुरोडाशः । सुखादिषु तृप्रशब्दः पठितः तृप्तिमात्रवचनः ॥ दृप्नोत्यनेनेति **दृप्रः** सर्पः ॥ वन्दत इति **वन्द्रः** । इदित्वान्नलोपाभावः । पूजकः[8]॥ **उद्रः**[9] दधिवेगः [उदधिचरः] मत्स्यहन्ता च । संपूर्वात् समुद्रः ॥ श्वेततेऽनेनेति **श्वित्रं** कुष्ठम् ॥ वर्तत इति **वृत्रं** कल्याणं दानवश्च[7] । पापमित्येके ॥ अजति सर्वत्र गच्छतीति, अजेर्वीभावः, **वीरः**[10] विक्रान्तः[11] ॥ नयति देशान्तरं प्राप्नोतीति **नीरं** जलम् ॥ पद्यतेऽयमिति **पद्रं** ग्रामनाम ॥ मद्यतेऽनेनेति **मद्रं** शिवं जनपदविशेषश्च ॥ **मुद्रा** विश्वासकारि नीलाञ्जनविशेष-साधनमित्यर्थः ॥ खिद्यतेऽनेनेति **खिद्रः** रोगविशेषः आदित्यश्च ॥ [12]छिद्यतेऽनेनेति

---

१. B omits this root and meaning.

२. B विष्फारारनियनैः.

३. B भोक्तुं.

४. A and C add सः.

५. A and C add क्षुद्रः.

६. B शिप्रा.

७. B बुद्धिश्च.

८. A and C भाजकः.

९. B उग्रः.

१०. B adds वीरः here and omits in line 16.

११. B and C add च.

१२. B omits छिद्यतेऽनेनेति.

छिद्रं विवरम् ॥ भिनत्तीति भिद्रं वज्रम् ॥ मन्दतेऽनेनेति मन्द्रः गम्भीरस्वरः ॥ चन्दयतीति चन्द्रः सोमः ॥ दहतीति दह्रः दावाग्निः बलाका च ॥ दस्रः तुरङ्गः[1] रश्मयश्च[2] ॥ दभ्नातीति[3] दभ्रः[4] अल्पः ॥ वसेर्यजादित्वात् संप्रसारणम्; वस्यन्त्येभिः[5] इति उस्राः रश्मयः ॥ वाश्यत इति वाश्रः पुरुषः ॥ शेते सर्वदेति शीरः अजगरः शयनीयं च[6] ॥ हसत्यनेनेति हस्रः[7] बलोत्पादनद्रव्यविशेषः ॥[8] सेधतीति[9] सेध्रः साधुः ॥ शोभत इति शुभ्रः निर्मलः ॥

---

## ॥ १६० ॥ निन्देर्नलोपश्च ॥ २—१४ ॥

"[10]णिदि कुत्सायाम्" अस्मात् रक्प्रत्ययो भवति, तत्सन्नियोगेन नलोपश्च । निन्द्यत इति निद्रः स्वापः[11] ॥

---

## ॥ १६१ ॥ तमेर्दुक् च ॥ २—१५ ॥

"तमु काङ्क्षायाम्[12]" अस्माद्रक्प्रत्ययो धातोर्दुगागमश्च । ताम्यत्यनयेति तन्द्रा आलस्यम् । तत्पूर्वाद्धातेः पृषोदरादित्वात् तन्द्राशब्दस्य साधुत्वमिति । "तन्द्री प्रमीला इति त्रिकाण्डीपाठात् साधुत्वम्" इति भागवृत्तिकारः ॥

---

## ॥ १६२ ॥ चकिरम्योरुच्चोपधायाः ॥ २—१६ ॥

"चक तृप्तौ प्रतिघाते च" "रमु क्रीडायाम्" आभ्यां रक्प्रत्ययः,

---

१. A and B उरगः.
२. A and C omit च.
३. A and B भद्रातीति.
४. A and B भद्रः.
५. B स्रवन्त्येभिः.
६. A and C omit शयनीयं च.
७. B adds मुखम्.
८. B omits बलो........शेषः.
९. B सेधति संसारप्रवृत्तिरोधं करोति इति, सिद्ध्यति अर्हति पूजां इति वा सिध्रः साधुजनः ॥
१०. B णिभृ-
११. A and C स्वप्नः.
१२. A and C ग्लानौ.

उपधाया उकारश्च भवति । चकते प्रतिहतो भवति अनेनेति चुक्रः[1] अम्लो[2] रसः ॥ रुम्रः विनाशः ॥

## ॥ १६३ ॥ वौ कसेः ॥ २—१७ ॥

उच्चोपधाया इति वर्तते । कसेर्विशब्द उपपदे रक्प्रत्ययः[3] उपधाया उकारश्च । विकसतीति विकुस्रः[4] चन्द्रः ॥

## ॥ १६४ ॥ शदेरू च ॥ २—१८ ॥

"शद्लृ शातने" अस्माद्रक्प्रत्ययः[5] ऊकारश्च टेर्भवति । शीयते गच्छतीति शूरः । "शूर[6] विक्रान्तौ" इत्यतोऽपि पक्षे पचाद्यचि शूरशब्दः संपद्यते, रूढिशब्दानां व्युत्पत्तेरनियमात् ॥

## ॥ १६५ ॥ स्थश्च ॥ २—१९ ॥

"ष्ठा गतिनिवृत्तौ" रक्[7], उकारश्चान्तादेशः । स्थीयतेऽनेनेति[8] स्थूरः पृष्ठभागः । पञ्चमेऽपि पादे ऊरंप्रत्ययान्तः[9][10] स्थूरशब्दो[11] व्युत्पाद्यते, व्युत्पत्तेरनियमात् । केचिदेतत्[12] सूत्रं नाधीयते[13] ॥

## ॥ १६६ ॥ अमितम्योः दीर्घश्च ॥ २—२० ॥

"अम" गत्यादिषु, "तमु काङ्क्षायाम्" आभ्यां रक्प्रत्ययः । तत्सन्नियोगेन[14] तयोरचो दीर्घो भवति । आम्रः चूतः ॥ ताम्रः उदुम्बरः[15] ॥

---

१. B छुक्रः.
२. B अम्लो.
३. B omits प्रत्ययः.
४. B विकस्रः.
५. A and C शदेरक्.
६. B omits प्रत्ययः.
७. A and C omit the root and meaning.
८. A and C तिष्ठतेः.
९. A adds प्रत्ययः.
१०. B उत्तरप्रत्यय-
११. B omits शब्दो.
१२. B omits एतत्.
१३. B नाभिधीयते.
१४. -योगे.
१५. C उदुम्बरम्.

## ॥ १६७ ॥ शुचेर्दश्च ॥ २—२१ ॥

शुचे रक्प्रत्ययः दकारश्चान्तादेशः, दीर्घश्च धातोरचः । शोचनीयत्वात् **शूद्रः** चतुर्थो वर्णः, त्रैवर्णिकव्यतिरिक्तजातिमात्रवचनोऽपि । श्रुताद्दूरः शूद्रः इति नैरुक्ताः[3] ॥

---

## ॥ १६८ ॥ दुरीणो लोपश्च ॥ २—२२ ॥

"ईण् गतौ" दुर्शब्द उपपदे इणो धातोः रक्प्रत्ययो भवति, धातोः लोपश्च । दुःखेन गन्तव्यं इति **दूरं** विप्रकृष्टम् । धातोर्लोपे "रो रि" इत्युपपदरेफस्य लोपे च "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति दीर्घः ॥

---

## ॥ १६९ ॥ कृतेः छः क्रू च ॥ २—२३ ॥

"कृती छेदने" अस्माद्रक्प्रत्ययः छक्रू आदेशौ[10] धातोर्भवतः[11] । छकार अन्तादेशः, क्रूसर्वादेशः । कृत्यतेऽनेनेति **कृच्छ्रं** दुःखम्[12] । कृन्तत्यस्मा-दिति **क्रूरः** दुष्टात्मा ॥

---

## ॥ १७० ॥ रोदेर्णिलुक् च ॥ २—२४ ॥

"रुदिर् अश्रुविमोचने" अस्मात् ण्यन्तात् रक्प्रत्ययः,[14] तत्सन्नियोगेन णेर्लुक् च भवति । रोदयति अश्रु कारयति अभक्तान् संसारिणो वा **रुद्रः**

---

१. A and C दश्चान्ता-
२. C श्रुतात्.
३. A नैरुक्तम्. C नैरुक्तः.
४. A and C omit root and meaning.
५. A and C omit इति.
६. A and B -पदे.
७. B लोपः.
८. A and C omit इति दीर्घः.
९. B छक्रः.
१०. B आदेशः.
११. B भवति.
१२. B omits दुःखम्.
१३. B कृन्तन्ति.
१४. A and C omit प्रत्ययः.

परमात्मा[1] । आरात् दुःखं[2] द्रावयति अपनयतीति[3] नैरुक्ताः । णिलुग्वचनं प्रत्ययलक्षणेन गुणो मा भूदिति ॥

---

## ॥ १७१ ॥ बहुलमन्यत्रापि संज्ञाच्छन्दसोः ॥ २—२५ ॥

संज्ञायां छन्दसि विषये च[4] रकोऽन्यत्रापि[5] बहुलं णेर्लुक् भवति । अपिशब्दात् रक् । वज्रचक्रशूलशब्देषूपपदेषु[6] च बहुलं भवति । "उणादयो बहुलम्" इत्यस्यैवायं प्रपञ्चः । शूलं धारयतीति शूलधरः । "वर्धन्तु त्वा" वर्धयन्तु इति प्राप्ते ॥

---

## ॥ १७२ ॥ जोरी च ॥ २—२६ ॥

"जुः" सौत्रो धातुः गतौ वर्तत इत्याहुः । गतिहेतौ वेग इत्यपरे । ईकारश्चान्तादेशः । जीरः अग्निः वृद्धः अश्वः[7] शरद्वा[8] ॥

---

## ॥ १७३ ॥ सुसूधागृधिभ्यः क्रन् ॥ २—२७ ॥

"षुञ् अभिषवे" "षू प्रेरणे" "डु धाञ् दानधारणयोः" "गृधु अभिकाङ्क्षायाम्" एभ्यः क्रन्प्रत्ययो भवति । नकारः[9] स्वरार्थः । सूयते पीड्यते[10] इति सुरा मदिरा[11] ॥ सुवति प्रेरयति प्राणिनः चेष्टायुक्तान् करोतीति सूरः आदित्यः ॥ दधाति प्रज्ञया सर्वमिति धीरः विनतः पण्डितश्च । घुमास्थादिसूत्रेणेत्वम् ॥ गृध्यति अभिकाङ्क्षतीति गृध्रः क्रव्यात् ॥

---

१. A omits परमात्मा.
२. C रक् । दुःखं-
३. B omits अपनयति.
४. B omits च.
५. B परतो-
६. A and C omit वज्र....पदेषु.
७. B omits अश्वः
८. A and C omit meaning.
९. B omits नकारः स्वरार्थः.
१०. B विद्यते.
११. B omits मदिरा.

॥ १७४ ॥ शुषिचिमीनां दीर्घश्च ॥ २—२८ ॥

शवतिर्गत्यर्थः । "षिञ् बन्धने" "चिञ् चयने" "मीङ् हिंसायाम्" एभ्यः क्रन्प्रत्ययो भवति, तत्सन्नियोगेनैषां दीर्घश्च[1] । शवतीति[2] **शूरः** विक्रान्तः ॥ **सीरं** हैलम्[3] ॥ **चीरं** वल्कलम् ॥ **मीरः**[4] समुद्रः पर्वतश्च ॥ **शूरशब्दस्य स्वरभेदात् पुनर्व्युत्पादनम्** ॥

॥ १७५ ॥ वाविन्धेः ॥ २—२९ ॥

"ईन्धी दीप्तौ"[5] विशब्द उपपदे इन्धेः क्रन्[6]प्रत्ययो भवति । विशेषेण इध्यते[7] दीप्यत इति **वीध्रं** नभः वायुः अग्निश्च । "विशदं विमलं वीध्रमुज्ज्वलम्" इति हलायुधः ॥

॥ १७६ ॥ वृधिवपिभ्यां रन् ॥ २—३० ॥

"वृधु वृद्धौ" "टु वप् बीजसन्ताने" आभ्यां रन्प्रत्ययो भवति । प्रत्ययान्तरकरणं कित्कार्यनिवृत्तये[8] । वर्ध्यते[9] बध्यतेऽनेनेति **वर्ध्रः** चर्ममयी रज्जुः चन्द्रश्च ॥ उप्यतेऽस्मिन्निति **वप्रः** केदारः नदीविशेषः विषं च प्राकारश्च[10] ॥

॥ १७७ ॥ ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशक्रशुक्लगौरवर्णेरामालाः[11][12] ॥ २—३१ ॥

ऋज्रादयो रन्प्रत्ययान्ता निपात्यन्ते । स्वरोऽपि केषुचित् निपातनान्न

---

१. A omits च.
२. B omits शवतीति.
३. B खलं.
४. A मीदः.
५. A and C omit root and meaning.
६. A कुन्-
७. B इन्धे.
८. A -वृत्त्यर्थम्.
९. B वध्यते.
१०. B प्रका-
११. B कुब्र.
१२. A वर्णो.
B वर्ण्रे.

भवति। तथा हि—इन्द्रशब्दः अन्तोदात्तोऽपि दृश्यते। किमत्र निपात्यते? "ऋज गतिस्थानार्जनोपार्जनेषु" अर्जनमलब्धलाभः[1]। उपार्जनं स्वीकरणम्[2]। अस्माद्रन्[3] गुणाभावश्च। अर्ज्यत इति **ऋज्रः** नायकः॥ "इदि परमैश्वर्ये" इन्दति परमेश्वरो भवतीति **इन्द्रः** आत्मा आदित्यः[4] देवराजश्च॥ "अगि[5]" गत्यर्थः। अस्माद्रन्। अङ्क्तीति[6] **अग्रं** प्रधानम्। नलोपो निपात्यते॥ "वज व्रज गतौ" अस्माद्रन्[7]। वजति गच्छति न प्रतिहन्यते इति **वज्रं** शक्रायुधम्॥ वपतेरुपाधाया इत्वं गुणाभावश्च निपात्यते[8]। वपन्त्यस्मिन्[9] धर्मादय इति **विप्रः** ब्राह्मणः॥ कुप्यतेः **कुप्रः** कुण्डम्॥ "चुप मन्दायां गतौ" चोपति मन्दं गच्छतीति **चुप्रं**[10] वक्रम्॥ "टु[11] क्षु शब्दे" **क्षुरः** अयोविकारः॥ "खुर छेदने विखण्डने च"। खुरे रन्, अन्त्यलोपश्च। खुरति छिनत्तीति **खुरः**[12] चतुष्पदां चरणैः[13]। खुरेः इगुपधलक्षणे केऽपि खुरसिद्धिः॥ "भदि कल्याणे सौख्ये च"। भन्दते **भद्रं** कल्याणम्। नलोपश्च[14] निपातनात्॥ "उच समवाये" उचति समवेतो[15] भवतीति **उग्रः** कपर्दी। उचेर्गकारः॥ "भी[16] भये" एत्वं प्रत्ययरेफस्य लत्वं वा। बिभेत्यस्मादिति **भेरः** **भेलः**[17] दुन्दुभिः॥ "शुच[18] शोके" अस्माद्रन्। ककारश्चान्तादेशः। **शुक्रः**। प्रत्ययरेफस्य वा लत्वम्; **शुक्लः** गुणविशेषः[19]। शोचनं शुक्[20]। शुगस्मिन्नस्तीति मत्वर्थे लक्, अकारेकाररेफाश्च प्रत्ययाः, इति यः शुक्रशब्दः स तु छान्दस

---

१. A अर्जनं.
२. A धिक्करणम्.
३. A and B -रक्.
४. A and C आदित्यश्च देवराजः.
५. A and C अङ्केः गत्यर्थात् रक्.
६. A and C अङ्गमिति.
७. A and C omit अस्माद्रन्.
८. A and C omit निपात्यते.
९. B वपस्य-
१०. B चुप्रः वप्रकम्.
११. A and C क्षौतेः क्षुरः.
१२. A omits खुरः.
१३. A adds खुरः.
१४. A and C नलोपस्य.
१५. A and C omit समवेतो.
१६. A and C भिय एत्वम्.
१७. B omits भेलः.
१८. A and C शुचे रन्.
१९. A and C तृण-
२०. A and C omit शुक्.

इति केचित् । तत्र[1] "भवे छन्दसि" इति[2] केचित् छन्दसीत्यनुवर्तयन्ति[3] । तेषां शुक्रो मासः इत्यादयः प्रयोगाः साधवः ॥ "गुरी उद्यमने" गुरेरुपधाया औकारः अन्त्यलोपश्च । **गौरः** वर्णविशेषः ॥ "वृञ्[4] वरणे" णप्रत्ययः । **वर्णः**। ब्राह्मणादयः रक्तादयश्च[5]। "वर्ण वर्णक्रियाविस्तारगुणवचनेषु[6]" इति चौरादिकः[7]। तस्मादचि[8] वर्णशब्दस्य सिद्धत्वात् वर्णग्रहणं न[9] कर्तव्यमित्याहुः। [10]किं च उत्तरत्र वर्णशब्दः नक्प्रत्ययान्तो व्युत्पादयिष्यते ॥ "ईणु[11] गतौ" अस्माद्रन् गुणाभावश्च[12] । **इरा** सितः पर्युषितम् ॥ "माङ्[13] माने" अस्माद्रन् लत्वं च । **माला** स्रक् । "शोममालीभ्यो लः" इति कैयटाचार्यः पठति स्मोणादिसूत्रम् ॥

---

## ॥ १७८ ॥ समि कस उकन् ॥ २—३२ ॥

"कस[14] गतौ" सम्युपपदे कसेर्धातोः[15]उकन्प्रत्ययो भवति । समन्तात् कसतीति **संकुसुकः** नदीविशेषः[16] । छान्दसो[17] वर्णव्यत्ययः ॥

---

## ॥ १७९ ॥ पचिणश्योः णुकन्कनुमौ च ॥ २—३३ ॥

"डु पचष् पाके" "णश अदर्शने" आभ्यां णुकन्प्रत्ययो भवति [18]णित्वात् वृद्धिः । कनुमौ यथासंख्यम् । ककार अन्तादेशः । पचतीति

---

1. A अत्र.
2. B छन्दस इति.
3. B adds अन्ये तु नानुवर्तयन्ति.
4. A and C वृञो णप्रत्ययः.
5. A and C omit ब्राह्मणादयः रक्तादयश्च.
6. B -विकारेषु.
7. B चोदितः.
8. A and C एरचि. B अरचि.
9. B omits न.
10. B omits किं च.
11. A and C एते रन्.
12. B omits गुणा........पर्युषितम्.
13. A and C माङो रन्.
14. A and C omit root and meaning.
15. B omits धातोः.
16. A omits नदीविशेषः.
17. B adds स्थलम् गुणश्च । संकुसुक इति.
18. B omits णित्वाद्वृद्धिः.

पाकुक[1]: सूर्यः अध्वर्युश्च ॥ णशेर्नुमागमः । नंशुकः करेणुः चन्द्रश्च[2] । णशेर्नुमि[3] कृते अनुपधत्वात् [4]अकारस्य वृद्धिर्न भवति ॥

---

## ॥ १८० ॥ भियः क्रुकन् ॥ २—३४ ॥

"[5]ञि भी भये" अस्मात् क्रुकन्प्रत्ययो [6]भवति । बिभेतीति **भीरुकः** कातर[7]ः । क्लुकन्नपि वक्तव्य इत्यस्यायं प्रपञ्चः ॥

---

## ॥ १८१ ॥ क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥ २—३५ ॥

अभ्यासपूर्वक्रियाकौशलं शिल्पम् । तदस्यास्तीति शिल्पी । अपूर्वस्य अविद्यमानपूर्वपदस्यापि धातोः क्वुन्प्रत्ययो भवति शिल्पिनि कर्तरि, संज्ञायां च गम्यमानायाम् । संज्ञाग्रहणं बहुलवचनस्य प्रपञ्चार्थम्[8] । अपिशब्दात् सपूर्व-पदस्यापि धातोः । रञ्जेः रञ्जयति वस्त्रादिकमिति रजकः वस्त्रनिर्णेजकः । "शिल्पिनि ष्वुन्" इति वा रजकः । रजकस्य स्त्री रजकी । तथा चोक्तं वार्तिक-कारेण "[9]रंजनरजकरजस्सु कित्वात्" इति । कित [10]एते औणादिका द्रष्टव्या इत्यर्थः[11] ॥ "कुट्ट छेदने[12]" इक्षून् कुट्टयतीति इक्षुकुट्टकः[13] ॥ "पीड अवगा-

---

1. B वा कुतः.
2. B omits चन्द्रश्च.
3. B शर्मि कुर्वते.
4. B दकारस्य.
5. A and C बिभेतेः.
6. A and C omit भवति.
7. B omits कातरः.
8. A and B प्रपञ्चार्थः.
9. B रजकरजन-
10. B हिते.
11. B adds "रघ लघि गत्यर्थौ" लङ्घकः मालाकारः । "खनु अवदारणे" खनकः कायस्थः। "पा पाने" काला इत्युपपदे काला पिबतीत्यकादेशः । उपपदसमासे च कृते आत इत्याकारलोपः । कलापकं शास्त्रम् ॥
12. B छेदनकुत्सनयोः.
13. B adds गोधिवः.

हने" तिलान् पीडयतीति तिलपीडकः तैलिकः[1] ॥ "बन्ध बन्धने" बन्धकः[2] । बाहुलकान्नलोपाभावः ॥

## ॥ १८२ ॥ जहातेर्द्वे च ॥ २—३६ ॥

"ओ हाक् त्यागे[3]" अस्मात् क्वुन्प्रत्ययो भवति धातोः द्वित्वं च[5] । जहातीति जहकः पुरुषः त्यागी च ॥

## ॥ १८३ ॥ ध्मो धम च ॥ २—३७ ॥

"ध्मा शब्दाग्निसंयोगयोः[6]" अस्मात् क्वुन्प्रत्ययो भवति, तत्सन्नियोगेन धमादेशश्च । धमकः दरिद्रः व्याधिश्च ॥

---

१. A and C omit तिलान् पीडयतीति.

२. B omits बन्धकः......लोपाभावः and has instead चूडां बध्नातीति चूडाबन्धकः । केशान् बध्नातीति केशबन्धकः । इदं संज्ञायां खल्वपि । अपूर्वस्यापि । "टु क्षु शब्दे" "धूञ् कम्पने" एभ्यः क्वुन्प्रत्ययो भवति । क्षुपकः । धुनातीति धुवकः । "जन जनने" जायत इति जनकः पिता । "चष भक्षणे" चषकं कोषकः । "धृञ् धारणे" धारिका माता । "ध्रु स्थैर्ये" ध्रुवकः । सपूर्वस्यापि । "खाद भक्षणे" अभ्यूष इत्युपपदम् । अभ्यूषं खादतीति अभ्यूषखादकः । क्रीडावारकः पुष्पप्रचायिका अपूपखादिका पूतना । "भञ्जो आमर्दने" सालभञ्जिका अविकरिकः (?) वारणपुष्पप्रचायिका क्रीडा ॥

३. A omits बन्धकः.

४. B adds ओकारः "ओदितश्च" इति विशेषणार्थः । ककारः । "हश्च व्रीहिकालयोः" इति सामान्य ग्रहणार्थः ॥

५. B omits भवति धातोः द्वित्वं च and has instead द्वे चास्य कार्ये । द्विर्वचनम् । "ह्रस्वः" इति ह्रस्वत्वम् । "कुहोः चुः" इति कुत्वम् । झकारः । "अभ्यासे चर्च" इति जश्त्वं जकारः । "आतो लोप इटि च" इति आकारलोपः ॥

६. A -सन्दीपनयोः.

## ॥ १८४ ॥ हनो वध च ॥ २—३८ ॥

हन्तेः क्वुन्प्रत्ययो वधादेशश्च । हन्तीति **वधकः** व्याधः[१] ॥

---

## ॥ १८५ ॥ बहुलमन्यत्रापि ॥ २—३९ ॥

"[२]उज्झ उत्सर्गे" उज्झकः ॥ "रुचँ दीप्तौ" रोचते रुचकः आभरणविशेषः ॥ "चष भक्षणे" चषकर्म्[३] ॥

---

## ॥ १८६ ॥ कृषेर्वृद्धिश्चोदीचाम्[५] ॥ २—४० ॥

"कृँष विलेखने" अस्मात् क्वुन्प्रत्ययो भवति उदीचां मतेन । धातोरचः स्थाने वृद्धिश्च । कृषतीति **कार्षकः** कुटुम्बी । प्राचां मतेन कृषकः ॥

---

## ॥ १८७ ॥ उदकम्[६] ॥ २—४१ ॥

उँन्देः नलोपः क्वुन्प्रत्ययश्च निपात्यते । अन्तोदात्तत्वं च निपातनात् । उनत्तीति उदकं जलम् ॥[७]

---

१. B adds "वध हिंसायाम्" इत्यतोऽपि ण्वुलि "जनिवध्योश्च" इति वृद्ध्यभावे वधकसिद्धिः । प्रपञ्चार्थं सूत्रम् ॥

२. B adds धातुषु बहुलं क्वुन्प्रत्ययः। "भिदिर् विदारणे" भिदकः ॥ "छिदिर द्वैधीकरणे" छिदकः ॥

३. A and C रुचेः.

४. B adds "टु नदी समृद्धौ" नन्दकः कल्याणिकः । एव मन्यत्रापि बोध्यम् ॥

५. A and C कृषेः.

६. B adds च.

७. B The commentary on this sūtra is as follows:— उदकमित्ययं शब्दो निपात्यते क्विन्प्रत्ययान्तः उत्पूर्वादञ्चतेः। "अञ्चु गतिपूजनयोः" उत्पूर्वाद्धातुलोपश्च । उदञ्चतीति उदकं जलम् ॥

## ॥ १८८ ॥ व्रश्चिकृषिकुशिभ्यः किकन् ॥ २—४२ ॥

"ओ व्रश्चू छेदने" "कृष विलेखने" "कुशि भाषणे" इति चौरादिकः इदित्। भौवादिको वा कुशिः। एभ्यः किकन्प्रत्ययो भवति। वृश्चतीति **वृश्चिकः** नक्षत्रराशिः कीटविशेषश्च। स तु विशेषो विषपुच्छी॥ कृष्यतेऽनेनेति **कृषिकः** हलम्॥ कुंशयतीति **कुशिकः**। बाहुलकान्नलोपः। कोशतेर्वा कुशिकः ऋषिविशेषः। कुशिकशब्दो बिदादिः॥

---

## ॥ १८९ ॥ प्राङि पणिकषः ॥ २—४३ ॥

"पण व्यवहारे स्तुतौ च"। कषतिः [1]हिंसार्थः दण्डके पठितः। आभ्यां च प्र आङ् इत्येतस्मिन् समुदाये उपपदे किकन्प्रत्ययो भवति। पणेर्यदा आयप्रत्ययो न भवति तदा किकन्प्रत्ययः[2]। प्रापणायतीति **प्रापणिकः** वणिक्॥ **प्राकषिकः** नर्तकः। यद्यपि प्राङिति समुदायात् सप्तमी [3]तथापि प्रत्येकमुपपदसंज्ञा उपपदसमासश्च। प्रत्येकं सुबिति निवृत्तत्वात् समुदायस्य वा॥

---

## ॥ १९० ॥ मुषेर्दीर्घश्च ॥ २—४४ ॥

"मुष स्तेये" अस्मात् किकन्प्रत्ययः तत्सन्नियोगेन धातोरचो दीर्घश्च। मुष्णात्यपनयति धा[4]न्यादिकमिति **मूषिकः** आखुः। "मूष स्तेये" भौवादिकः। तस्मात् किकन्प्रत्यये[5] दीर्घवचनमन्तरेणापि मूषिकशब्दस्य सिद्धत्वात् दीर्घवचनं विस्पष्टार्थम्। एवं च मूषेर्ण्वुलि मूष[6]क इत्यपि साधुः॥

---

१. B हिंसार्थेदण्डके.
२. C omits प्रत्ययः.
३. A adds सः.
४. A and B धात्वादिकं.
५. A -प्रत्ययः.
६. A and C मूषिकः.

## ॥ १९१ ॥ स्यमेः प्रसारणं च ॥ २—४५ ॥

"स्यमु स्वन ध्वन शब्दे" अस्मात् किकन्प्रत्ययो भवति, [1]प्रसारणं च। चकाराद् दीर्घश्च। स्यमतीति सीमिकः वृक्षविशेषः वल्मीकशिखा च॥

---

## ॥ १९२ ॥ क्रिय इकन् ॥ २—४६ ॥

"डु क्रीञ् द्रव्यविनिमये" इत्यस्मात् इकन्प्रत्ययो भवति। क्रीणातीति क्रयिकः क्रेता। "वस्नक्रयविक्रयात्" "डु क्रीञ्" इति क्रयविक्रयग्रहणस्य संघातविगृहीतार्थत्वात् क्रयेण जीवतीति [3]क्रायिक इत्यपि सिद्धम्॥

---

## ॥ १९३ ॥ आङि पणिपनिपतिखनिभ्यः ॥ २—४७ ॥

"पण व्यवहारे स्तुतौ च" "पन[4]" च। "पतॢ गतौ" "खनु अवदारणे" एभ्य इकन्प्रत्ययो भवति। आ समन्तात् पणायतीति आपणिकः वणिक्॥ आ पनायतीति आपनिकः इन्द्रनीलः[5]॥ आ समन्तात् पततीति आपतिकः मयूरः॥ आ[6] खनतीति आखनिकः मूषिकः। "खनो घ च" इत्यत्र "ईको वक्तव्यः[7]" इत्याखनिकशब्दः सिद्धः ईति तस्यैवायं[8] प्रपञ्चः॥

---

## ॥ १९४ ॥ श्यास्त्याहृञविभ्य इनच् ॥ २—४८ ॥

"श्यैङ् गतौ" "स्त्यै ष्ट्यै शब्दसंघातयोः" "हृञ् हरणे" "अव" रक्षणादिषु[9]। एभ्य इनच्प्रत्ययो भवति। श्यायते गच्छतीति

---

१,२. B संप्र-
३. B क्रयिकः.
४. B omits पन च.
५. B आ पणति यमिति आपनिकः इन्द्रनीलम्.
६. B आ समन्तात् खनतीति.
७. B omits इको वक्तव्यः.
८. A and B इत्यस्यैवायं.
९. A and B रक्षणे.

**श्येनः** पक्षिविशेषः ॥ स्त्यायतीति [1]**स्त्येनः** चोरः । "स्तेनाद्यत् नलोपश्च" इति [2]स्तेनशब्दोऽपि साधुः । तथा हि—"स्तेन चौर्ये" इति चौरादिकः, तस्मात् पचाद्यचि स्तेनः ॥ हरतीति **हरिणः** मृगः ॥ अवतीति **अविनः**[3] अध्वर्युः ॥

---

## ॥ १९५ ॥ वृजेः किच्च ॥ २—४९ ॥

"वृजी वर्जने" अस्मादिनच्प्रत्ययः किच्च भवति[4] । व्रज्यते त्यज्यते इति **वृजिन** पापं कुटिलः पन्थाश्च[5] ॥

---

## ॥ १९६ ॥ अजेरज च ॥ २—५० ॥

"अज[6] गतिक्षेपणयोः" अजेरिनच्प्रत्ययः, तत्सन्नियोगेन धातोः अजादेशो भवति । आदेशवचनं वीभावनिवृत्तये । गतं तत् इति **अजिनम्** । भूते काले कर्मणि । चर्म[7] अजिनम् ॥

---

## ॥ १९७ ॥ बहुलमन्यत्रापि ॥ २—५१ ॥

उक्तेभ्यो धातुभ्योऽन्यत्रापि धातुषु बहुलमिनच्प्रत्ययः । "कठ कृच्छ्रजीवने" **कठिनं** कर्कशम् ॥ "कुडि दाहे" **कुण्डिनं** नाम नगरम् । "बृहि वृद्धौ" इनचि, बृंहेरपि 'अनिदि" इति नलोपे **बर्हिणः** मयूरः । "फलबर्हाभ्यामिनच्" इति[8] मत्वर्थीये इनच्प्रत्यये बर्हिणशब्दः साधुः ॥

---

१. B स्तेनः.
२. A स्त्येन-
३. B adds मृगः.
४. B omits भवति.
५. A omits पन्थाः.
६. A and C omit root and meaning.
७. B omits चर्म.
८. B omits इति........इनच्.

॥ १९८ ॥ द्रुदक्षिभ्यामिनन् ॥ २—५२ ॥

"द्रु गतौ" "दक्ष वृद्धौ शीघ्रार्थे" आभ्यामिनन्प्रत्ययो भवति । प्रत्ययान्तरकरणं स्वरविशेषात् । द्रूयते गम्यते इति **द्रविणं** धनं सत्यं च ॥ दक्षते वर्धतेऽनयेति **दक्षिणा** सत्कारपूर्वकं दीयमानद्रव्यविशेषः ॥

---

॥ १९९ ॥ द्रुहेः कित् ॥ २—५३ ॥

द्रुहेः इनन्प्रत्ययः किच्च । द्रुह्यतीति **द्रुहिणः** प्रजापतिः ॥

---

॥ २०० ॥ अर्तेरिच्च[1] ॥ २—५४ ॥

किदित्येव । "ऋ गतौ" अस्मादिनन्प्रत्ययः किच्च । धातोरिकार अन्तादेशः । अर्यते त्यज्यते इति **इरिणम्** ऊषरप्रदेशः ॥

---

॥ २०१ ॥ वेपितुह्योः ह्रस्वश्च ॥ २—५५ ॥

"टु वेपृ कम्पने" "तुहिर् दुहिर् अर्दने" आभ्यामिनन्प्रत्ययः । तत्सन्नियोगेन वेपतेरचो ह्रस्वो भवति । वेपयतीति **विपिनं** दुष्प्रवेशं वनम् ॥ तोहति अर्दयतीति **तुहिनं** हिमम् । चकारात् किदित्येव ॥

---

॥ २०२ ॥ महेरिनण् च ॥ २—५६ ॥

महेरिनण्प्रत्ययो भवति । **माहिनं** शरशयनम्[2] ॥

---

॥ २०३ ॥ क्विब्वचिप्रच्छिश्रिद्रुस्रुकटप्रुज्वां दीर्घोऽप्रसारणं च ॥ २—५७ ॥

---

1. B अर्तेरिनन्-

2. B "मह पूजायाम्" माहिनं राज्यम्.

"वच परिभाषणे" "प्रच्छ ज्ञीप्सायाम्" "श्रिञ् सेवायाम्" "द्रु गतौ" "स्रु गतौ[२]" "प्रुङ् गतौ[३]" "जुः[४]" सौत्रो धातुः। एभ्यः क्विप्प्रत्ययो भवति, तत्सन्नियोगेन[५] दीर्घः प्रसारणाभावश्च भवति[६]। [७]उच्यते इति **वाक्** वाणी॥ [८]पृच्छतीति **प्राट्** शिष्यः। पन्थानं पृच्छतीति **प्राट्** पथिकः॥ [९]हरेरुरस्थलं श्रयतीति **श्रीः** लक्ष्मीः॥ द्रवतीति **द्रूः** हिरण्यम्॥ स्रवतीति **स्रूः** नदीविशेषः॥ कटपूर्वात् **कटप्रूः** कामः चित्तं च॥ **जूः** पिशाचः॥

---

## ॥ २०४ ॥ आप्नोतेर्ह्रस्वश्च ॥ २—५८ ॥

"आॅप्लृ व्याप्तौ" अस्मात् क्विप्। तत्सन्नियोगेनाचो ह्रस्वो भवति। आप्यत इति **अपः[११]** सलिलम्॥

---

## ॥ २०५ ॥ परौ[१२] व्रजेः षश्च पदान्ते ॥ २—५९ ॥

"व्रज गतौ" परिपूर्वात् व्रजेः क्विप्। चकारात् दीर्घश्च भवति पदान्तविषये। षकार अन्तादेशश्च। तेन "स्वादिषु असर्वनामस्थाने" इति यत्र पदसंज्ञा तत्र षकारः। परितो व्रजति संसारपीडाद्यभावात् इति **परिव्राट्** मस्करी। यदि वा परिव्रजति त्यजति संसारदुःखमिति परिव्राट्। परिपूर्वो व्रजतिः अनेकार्थत्वात् त्यागे वर्तते। षत्ववचनं कुत्वविघातार्थम्। पदान्ते षत्वम्। परिव्राड्भ्यां परिव्राड्भिः। पदान्त इति किम्?[१३] परिव्राजौ परिव्राजः॥

---

१,२,३. A and C omit meaning.
४. B adds इति.
५. A, B and C add वचिप्रच्छयोः दीर्घश्च। इतरेषामजन्तानां।
६. B omits भवति.
७. B adds "चोः कुः" इति कुत्वम्.
८. A and C परिव्राट् शब्दव्राट् instead of पृच्छ....पथिकः.
९. B adds श्रयति.
१०. A and C आप्नोतेः धातोः.
११. A अपः.
१२. C परेः.
१३. A omits किम्.

## ॥ २०६ ॥ हुवः श्लुवच्च ॥ २—६० ॥

"हु[1] दानादानयोः"[2] अस्मात् क्विप् । श्लाविव चास्मिन् कार्यं भवति । किं पुनस्तत्? द्विर्वचनम्, चकारात् दीर्घश्च । हूयतेऽनेनेति जुहूः होमसाधनम् ॥

---

## ॥ २०७ ॥ द्युतिदृणातेर्ह्रस्वश्च ॥ २—६१ ॥

"द्युत दीप्तौ" "दॄ विदारणे" आभ्यां क्विप्, तत्सन्नियोगेन दृणातेर्ह्रस्वः । चकारात् श्लुवच्च । द्योतते इति दिद्युत् अग्निः आदित्यश्च ॥ दृणातीति ददृत् हिंस्रः। "क्विब्वचिप्रच्छ्यायतस्तु कटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च" "द्युतिगमिजुहोतीनां द्वे च" इति तच्छीलादिषु क्विप् विधीयते । अथ तु तत्रापि तच्छीलादिग्रहणं निवर्तते, न[3] शक्यं वच्यादिग्रहणं कर्तुम् । तत्क्रियमाणं तस्यैव प्रपञ्चाय ॥

---

## ॥ २०८ ॥ स्रुवः कन् ॥ २—६२ ॥

"स्रु[4] गतौ" अस्मात् कन्प्रत्ययो भवति । कित्करणं गुणाभावार्थम् । स्रवत्यस्मादाज्यादिकमिति स्रुवः होमसाधनम् ॥

---

## ॥ २०९ ॥ चिक् च ॥ २—६३ ॥

स्रुव इति वर्तते । स्रुवः[5] चिक्प्रत्ययो भवति । इकार उच्चारणार्थः । ककारः[6] कित्कार्यार्थः । स्रवत्यस्मादिति स्रुक् स एव ॥

---

1. A and C हुः.
2. A and C "हु दाने."
3. A and B omit न.
4. A and C स्रुवः कन्प्र-
5. B अस्मात्.
6. B omits from ककारः up to "रु शब्दे" in the commentary on Sūtra II-75.

## ॥ २१० ॥ तनोतेरनश्च वः ॥ २—६४ ॥

चिक् इति वर्तते । तनोतेश्चिक्प्रत्ययो भवति । अनूशब्दस्य व इत्ययं समुदाय आदेशः । तनोति छादयतीति त्वक् चर्म । "त्वच संवरणे" इत्यस्मादपि सम्पदादिक्विपि त्वक्शब्दः सिद्ध्यतीति प्रपञ्चार्थं व्युत्पादनम् । अस्यां व्युत्पत्तौ इष्टलिङ्गसिद्धिश्च । वासरूपविधानात् त्वच्यते संव्रियते अनेनेति पुंसि संज्ञायां घो भवति त्वच इति । अत एव "सत्याप" इत्यादौ णिच्-सूत्रे "अकारान्तस्त्वचशब्दः" इति वृत्तिकारेण उक्तम् ॥

---

## ॥ २११ ॥ ग्लानुदिभ्यां डौ ॥ २—६५ ॥

"ग्लै हर्षक्षये" "नुद प्रेरणे" आभ्यां डौप्रत्ययो भवति । ग्लायति क्षिणोति बहुलपक्ष इति **ग्लौः** चन्द्रः ॥ नुद्यते प्रेर्यत इति **नौः** तरी ॥

---

## ॥ २१२ ॥ च्विरव्ययम् ॥ २—६६ ॥

च्विरिति "अभूततद्भावे" इत्यादिना विहितस्य च्वेर्ग्रहणम् । प्रत्ययग्रहण-परिभाषया तदन्तविधिः । तेन च्विप्रत्ययान्तो गृह्यते । उणादीनां व्युत्पत्तिपक्षे एजन्तानां उणादीनां "कृन्मेजन्तः" इति अव्ययसंज्ञा प्राप्ता अनेन नियम्यते । एजन्तानां उणादीनां यद्यव्ययसंज्ञा, च्व्यन्तानामेवेति । अस्मान्नियमात् अग्लौः ग्लौः सम्पद्यते ग्लौभवतीत्यत्र अव्ययसंज्ञा भवति[2] । इह न भवति ग्लौः ॥

---

## ॥ २१३ ॥ रातेर्डैः[1] ॥ २—६७ ॥

"रा आदाने" अस्मात् डैप्रत्ययो भवति ॥ रायते दीयते इति **राः** स्वर्णम् ॥

---

1. A adds **तनोतेः**.
2. A **न भवति**.
3. C omits visarga.

॥ २१४ ॥ गमेर्डोः ॥ २—६८ ॥

गमेर्धातोर्डोप्रत्ययो भवति । गच्छतीति **गौः** चतुष्पात् । च्विरव्यय-मित्येव । अगौर्गौस्सम्पद्यते गोभवति ॥

---

॥ २१५ ॥ भ्रमेर्डूः ॥ २—६९ ॥

"भ्रमु अनवस्थाने" अस्मात् डूप्रत्ययो भवति । भ्राम्यतीति **भ्रूः** अक्ष्णोरुपरि रोमपङ्क्तिः ॥

---

॥ २१६ ॥ दमेर्डोस् ॥ २—७० ॥

"दमु उपशमने" अस्मात् डोस्प्रत्ययो भवति । दम्यते अनेनेति **दोः** बाहुः । दोषौ दोषः ॥

---

॥ २१७ ॥ पणेरिज्यादेश्च वः ॥ २—७१ ॥

पणेरिजिप्रत्ययो भवति । आदेर्वकारश्च [1]भवति । पणायतीति **वणिक्** । वणिजौ वणिजः ॥

---

॥ २१८ ॥ वशः कित् ॥ २—७२ ॥

"वश कान्तौ" अस्मादिजिप्रत्ययः, किच्च भवति । ग्रहिज्या-दिना सम्प्रसारणम् । उश्यत इति **उशिक्** । उशिजौ उशिजः । अग्निः गन्ध-द्रव्यं च ॥

---

॥ २१९ ॥ भृञ उच्च ॥ २—७३ ॥

भृञ उजिप्रत्ययो भवति । उकारश्च भवत्यन्तादेशः । बिभर्तीति **भुरिक्** राजा आपः वसुन्धरा च । उकारादेशे रपरत्वे च विहिते लघूपधत्वात् गुणः प्राप्तः । कित्करणानुवृत्तेर्वा तपरकरणसामर्थ्याद्वा न भवति ॥

---

1. A omits भवति.

## ॥ २२० ॥ जसिसहोरुरिन् ॥ २—७४ ॥

"जसु मोक्षणे हिंसायां च" "षह मर्षणे" आभ्यामुरिन्प्रत्ययो भवति। जासयतीति **जसुरिः** अग्निः क्रोधश्च ॥ सहत इति **सहुरिः** अनड्वान् आदित्यश्च ॥

---

## ॥ २२१ ॥ सुयुरुवृञो युच् ॥ २—७५ ॥

"षुञ्" "यु मिश्रणे" "रु शब्दे" "वृञ् वरणे" एभ्यो युच्-प्रत्ययो भवति। चकारः अन्तोदात्तार्थः[2]। योरनादेशः[3]। सूयतेऽस्मिन्निति **सवनः** कालविशेषः[4] ॥ यूयते मिश्र्यते वर्णाश्रमविभागाभावात् इति **यवनः** म्लेच्छजातिः ॥ रौतीति **रवणः** उष्ट्रः भ्रमरश्च। "चलनशब्दार्थात्[5]" इति ताच्छीलिके युचि रवणशब्दस्य सिद्धत्वात् प्रपञ्चार्थं व्युत्पादनम्। "रूढिप्रकाराः ताच्छीलिकाः" इत्यर्थविशेषे साधुत्वं सिद्धम् ॥ वृणोतीति **वरणः** आपः सेतुः नदी वृक्षश्च ॥

---

## ॥ २२२ ॥ अशो रश च ॥ २—७६ ॥

"अशू व्याप्तौ" अस्माद्युच्प्रत्ययो भवति, तत्सन्नियोगेन धातो रश इत्ययमादेशो भवति[6]। अश्नुत इति **रशना** मेखला ॥

---

## ॥ २२३ ॥ उन्देर्नलोपश्च ॥ २—७७ ॥

"उन्दी क्लेदने" अस्माद्युच्प्रत्ययो भवति, तत्सन्नियोगेन धातोर्नलोपश्च[7]। उनत्ति क्लेदयति[8] शरीरादिकमिति **ओदनम्** अन्नम्। नलोपे कृते गुणो भवति,

१. A and C omit meaning.
२. B अन्तादेशार्थः.
३. B "युवोरनाकौ" इति अनादेशः.
४. B omits काल........यवनः.
५. B चरणशब्दार्थात् अकर्मकाद्यजितिलिके ?
६. B omits भवति.
७. A omits तत्........पश्च.
८. A उन्दयति.

आर्धधातुकनिमित्तत्वाभावात् धात्वैकदेशलोपस्य । संनियोगशिष्टानां हि निमित्त-निमित्तिभावो नास्ति, यथा द्वयोः[1] शृङ्गयोः युगपदुत्पद्यमानयोः । यदि वा नधातुलोपसूत्रस्य प्रत्याख्यानात् गुणो भवति ॥

---

## ॥ २२४ ॥ बहुलमन्यत्रापि ॥ २—७८ ॥

उक्तेभ्यो[2]ऽन्येष्वपि धातुषु बहुलं युच्प्रत्ययो भवति[3] । द्योतते[4] द्योतनः अग्निः[5] ॥ स्यन्दते स्यन्दनः रथः[6] ॥ रोचते[7] रोचनः आदित्यः[8] । रोचना[9] गोरोचना[10] ॥ चन्देः[11] चन्दनं गन्धद्रव्यम् ॥ वयतेः[12] वयनः वायुः ॥ न च भवति द्योतिता स्यन्दिता ॥

---

## ॥ २२५ ॥ रञ्जेः क्युन्[13] ॥ २—७९ ॥

"रञ्ज रागे" अस्मात् क्युन्[14]प्रत्ययो भवति । ककारः कित्कार्यार्थः । रज्यतेऽस्मिन्निति रजनः रङ्गः[15] रागश्च ॥

---

१. A omits द्वयोः.

२. B adds धातुभ्यः.

३. B omits प्रत्ययो भवति.

४. B adds इति.

५. A omits अग्निः.

६. A अग्निः.

७. B adds इति.

८. A वायुः.

९. A omits रोचना........वायुः.

१०. B adds च। "दह भस्मीकरणे" "भू सत्तायाम्" दहनः अग्निः ॥ भवनं गृहम् ॥

११. B "चदि आह्लादने."

१२. B omits वयतेः........स्यन्दिता but has instead "शॄ हिंसायाम्" शृणाति शीर्यते वा अस्मिन् पुरुष इति शरणं गृहं त्राता च ॥ "मदी हर्षग्लेपनयोः" स्त्रीपुंसौ मदयतीति मदनः कामः ॥ "भुज पालनाभ्यवहारयोः" भुज्यतेऽनेनेति भोजनं अशनम् ॥ "पूञ् पवने" पवनः वायुः ॥ "डु कृञ् करणे" करणः साधनम् ॥ "णीञ् प्रापणे" नयनं नेत्रम् ॥ "डु पचष् पाके" पचनः अग्निः ॥ "दिवु" क्रीडादिषु । देवनः । तत्र न भवति यत्र तृच् नेतव्यः । एवमन्यत्रापि बोद्धव्यम् ॥

१३,१४. B क्विन्.

१५. A omits रङ्गः.

## ॥ २२६ ॥ भूसूधूभ्रस्जिभ्यः छन्दसि ॥ २—८० ॥

"भू[1] सत्तायाम्" "षू प्रेरणे" "षूञ् प्राणिप्रसवे[2]" वा "धूञ् कम्पने" "धू विधूनने" वा "भ्रस्ज पाके" एभ्यः क्युन्प्रत्ययो भवति छन्दसि विषये। भवतीति[3] **भुवनं** पन्थाः द्यौः अन्तरिक्षं च। बाहुलकात् भाषायामपि साधुत्वम्। तथा च भर्तृ[4]काव्ये प्रयोगः "भुवनहितच्छलेन" इति ॥ सुवतीति **सुवनं** चन्द्रतेजः ॥ धुनोतीति **धुवनं** धूपः[5]। निपूर्वात्[6] निधुवनं भाषायामपि ॥ **भृज्जनम्**[7] अम्बरीषः, भृज्जति पचत्यस्मिन्निति कृत्वा। बाहुलकात् भाषायामपि ॥

---

## ॥ २२७ ॥ कॄपॄव्रजिमन्दिनिधाञ्भ्यः[8] क्युः ॥ २—८१ ॥

"कॄ विक्षेपे" "पॄ पालनपूरणयोः" "व्रज गतौ" "मदि[9] स्तुत्यादौ। "डु धाञ् दान[10]धारणयोः" निपूर्वः। एभ्यः क्युप्रत्ययो भवति। कीर्यन्ते[11] विक्षिप्यन्ते आदित्येनेति[12] **किरणाः** रश्मयः ॥ **पूरणः**[13] समुद्रः ॥ **व्रजनम्** अन्तरिक्षम् ॥ मन्दत इति **मदनः** कामः[14] ॥ निपूर्वो धाञ् विनाशवृत्तिः। **निधनं** नाशः। बाहुलकात् केवलादपि धाञः धनं द्रव्यम् ॥

---

१. A and B omit root and meaning.
२. A and C omit meaning.
३. B adds **कित्वात् गुणाभावः। यणि प्राप्ते उवङ्.**
४. A **भट्टि-**
५. B omits **धूपः.**
६. C **निपूर्व.**
७. C adds **बाहुलकात्.**
८. B **-धाञः.**
९. A and C omit root and meaning.
१०. A and C omit meaning.
११. B adds "**ऋत इद्धातोः**" **इतीत्वम्.**
१२. A and C **अनेनेति.**
१३. B adds "**उदोष्ठ्यपूर्वस्य**" **इत्युत्वम्।** "**र्वोरुपधाया इकः**" **इति वर्तमाने** "**हलि च**" **इति दीर्घः ॥**
१४. B omits **कामः.**

## ॥ २२८ ॥ धृषेर्धिष च संज्ञायाम् ॥ २—८२ ॥

"[1]ञि धृषा प्रागल्भ्ये" अस्मात् क्युप्रत्ययो भवति, तत्सन्नियोगेन धातोः धिष इत्ययमादेशः। धृष्णोत्यनयेति **धिषणा** बुद्धिः अन्तरिक्षं पृथ्वी च। संज्ञाग्रहणं विस्पष्टार्थम् ॥

---

## ॥ २२९ ॥ हन्तेर्घुर च ॥ २—८३ ॥

"[2]हन हिंसागत्योः" अस्मात् क्युप्रत्ययो भवति, [3]तत्सन्नियोगेन धातोः घुर इत्ययमादेशः। [4]हन्तीति **घुरणः** शब्दः[5]। "घुर भीमार्थशब्दयोः" इत्यस्य [6]बहुलवचनात् ल्युटि "संज्ञापूर्वको विधिरनित्यः" इति गुणाभावे च घुरणशब्दस्य सिद्धत्वात् सूत्रमिदं प्रपञ्चार्थम् ॥

---

## ॥ २३० ॥ वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ॥ २—८४ ॥

वर्तमानकाले [7]पृषदादयो निपात्यन्ते। "पृषु मृषु वृषु सेचने" [8]अस्मादति-प्रत्ययः शतृवद्भावश्च भवति। शतृवद्भावात् "उगितश्च" इति ङीप्। "उगिदचाम्" इति नुमादि। **पृषत्** पृषती मृगः मृगी ॥ "बृह वृद्धौ" अतिप्रत्ययान्तो निपात्यते शतृवद्भावश्च। बृहतीति **बृहत्** विपुलम्। बृहती ओषधिविशेषः ॥ महत इति **महान्** पूज्यः श्रेष्ठश्च ॥ गमेः निपातनात् द्विर्वचनं मकारलोपश्च। गच्छतीति **जगत्**। जगती छन्दोविशेषः ॥

---

1. B The commentary on this sūtra is as follows:— विषये धिषणा बुद्धिः अन्तरिक्षं पृथिवी पार्वती च ॥
2. A and C हन्तेः क्यु-
3. B omits तत्सन्नि....धातोः.
4. B omits हन्तीति.
5. B omits शब्दः.
6. B बहुवचनशब्दात्.
7. B वृषभादयो.
8. B omits अस्मात्........विपुलं and reads instead "बृह बृहि वृद्धौ" "मह पूजायाम्" "गमॢ सृपॢ गतौ" एभ्यः क्रिप्रत्ययो भवति वर्तमानकाले। शतृवच्छेषकार्याणि भवन्ति। उकार उच्चारणार्थः। गुणाभावो निपात्यते, शतृवच्चैषां कार्यं भवति नुमादि॥ "उगितश्च" इति ङीप्; पृषत् पृषती मृगः मृगी। बर्हतीति बर्हं विपुलम् ॥

॥ २३१ ॥ [1]संश्चत्तृपद्वेहत् ॥ २—८५ ॥

[2]संपूर्वाच्चिनोतेरतिप्रत्ययः, इकारलोपो धातोः सुडागमश्च निपात्यते। संचिनोतीति **संश्चत्** कुहकः[3]। [4]भृशादिः संश्चत्शब्दः ॥ [5]तृप्यतेरतिप्रत्यये गुणाभावः। तृप्नोतीति **तृपत्** चन्द्रः। [6]तृपत् सुखादिः (?) ॥ [7]विपूर्वात् जहातेरतिः, आकारलोपः, उपसर्गस्यैत्वं च। विजहातीति **वेहत्** [8]गर्भघातिनी ॥

---

॥ २३२ ॥ छन्दस्यसानच् शवजॄभ्याम्[9] ॥ २—८६ ॥

[10]शवतिर्गत्यर्थः। "जॄ वयोहानौ" आभ्यां छन्दसि विषये असानच्प्रत्ययो भवति। शवतीति **शवसानः** ज्वलनः पन्थाश्च[11] ॥ [12]जीर्यतीति **जरसानः** पुरुषः आयुश्च ॥

---

॥ २३३ ॥ ऋजिव्रजिमन्दिसहिभ्यः कित् ॥ २—८७ ॥

"ऋज गतिस्थानार्जनोपार्जनेषु" "व्रज गतौ" "मदि स्तुतिमोद[13]मदस्वप्नकान्तिगतिषु" "षह मर्षणे[14]" एभ्यः असानच्प्रत्ययो भवति किच्च[15]। **ऋजसानो** मेघः ॥ **व्रजसानः** पुरुषः ॥ **मन्दसानः** जीवो अग्निः[16] सूर्यः चन्द्रमाः हंसश्च[17] ॥ **सहसानः** मयूरः ॥

---

१. A संश्चित्-
२. B omits संपूर्वात्......निपात्यते and reads instead इतीमे शब्दा अतिप्रत्ययान्ता निपात्यन्ते। "चिञ् चयने" संपूर्वात् सुगागमः। टिलोपादि निपात्यते। "स्तोः श्चुना श्चुः" इति श्चुत्वम्। सकारस्य शकारः ॥
३. B adds उहकः.
४. B omits भृशा........शब्दः ॥
५. B "तृप तृम्प तृप्तौ" गुणाभावः.
६. B समुद्रश्च.
७. B adds "ओ हाङ् गतौ."
८. B वन्ध्या गौः ॥
९. B शुजॄभ्यां
१०. B "शॄ हिंसायाम्".
११. B अग्निः सारथिश्च.
१२. B शानेषु जोर्यत इति जरवाहः प्राणि आर्य (?) च ॥
१३. B स्तुत्यादौ.
१४. A and C omit meaning.
१५. A and C add भवति.
१६. A adds च.
१७. A अग्निश्च.

## ॥ २३४ ॥ अर्तेर्गुणः शुट् च ॥ २—८८ ॥

"ऋ गतौ" असानच्प्रत्ययः, गुणः, प्रत्ययस्य शुडागमश्च । **अर्शसानः** अग्निः ब्राह्मणश्च ॥

---

## ॥ २३५ ॥ सम्यानच् स्तुवः ॥ २—८९ ॥

"ष्टुञ् स्तुतौ" अस्मात् सम्युपपदे आनच्प्रत्ययो भवति । संस्तौतीति **संस्तवानः** उद्गाता महिषश्च ॥

---

## ॥ २३६ ॥ युजिबुधिदृशिभ्यः किच्च ॥ २—९० ॥

"युजिर् योगे" "युज समाधौ" वा "बुध अवगमने" "दृशिर् प्रेक्षणे" एभ्य आनच्प्रत्ययो भवति किच्च । युनक्तीति **युजानः** सूर्यः वायुश्च ॥ बोधयतीति **बुधानः** आचार्यः पितरः देवाः ओदनश्च ॥ **दृशानः** ज्योतिः आदित्यः चन्द्रः ब्राह्मणश्च ।

---

## ॥ २३७ ॥ पषेर्णिच्च ॥ २—९१ ॥

"पष बाधनस्पर्शनयोः" अस्मादानच्प्रत्ययो भवति णिच्च । णित्वादुपधाया वृद्धिः । **पाषाणः** शिला ॥

---

## ॥ २३८ ॥ मुचियुधिभ्यां सन्वच्च ॥ २—९२ ॥

"मुँच्लृ मोक्षणे" "युध संप्रहारे" आभ्यामानच्प्रत्ययो भवति सनीव तस्मिन् कार्यं द्विर्वचनम् । **मुमुचानः** मेघः ॥ **युयुधानः** साहसिकः ॥

---

१. A and C अर्तेः.
२. B omits च.
३. A and C -दृशेः.
४. C omits meaning.
५. A omits बोध......ओदनश्च ॥
६. B उपधावृद्धिः.
७. A and C मुचियुधिभ्यां.
८. B omits भवति.
९. B सन्वच्च । मुमुचानः.
१०. B adds सात्विकश्च.

॥ २३९ ॥ हुर्च्छेः सनो लुक् छलोपश्च ॥ २—९३ ॥

"हुर्च्छा कौटिल्ये" अस्मात्सन्नन्तादानच्प्रत्ययो भवति, सनो लुग्भवति, छकारलोपश्च भवति[1] । जुहुराणः अनड्वान् अग्निः छागः अधर्मः वयोवृद्धश्च[2] । केचित् "छन्दस्यसानच्" इत्यादि [इत्यतः] सूत्रेषु छन्दसीत्यनु वर्तयन्ति । तेषां छान्दसान्येतानि नामानि; अन्येषामविशेषेण। भाषायामपि[3] पाषाणशब्दस्य साधुत्वम् । बाहुलकाद्वा भाषायामपि साधुत्वम् ॥

---

॥ २४० ॥ तृंस्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥ २—९४ ॥

"शंस स्तुतौ" क्षदिः सौत्रः धातुः । आदिशब्दः प्रत्येकमभिसंबध्यते । शंसादिभ्यः क्षदादिभ्यश्च धातुभ्यः यथासंख्यं तृन् तृच् इत्येतौ[4] प्रत्ययौ भवतः[5] संज्ञायां विषये[6] । तौ चानिटौ भवतः । [7]शास्ता वरुणः । प्रशास्ता । शास्ता गुरुः ॥ [8]क्षत्ता सारथिः ॥

---

॥ २४१ ॥ बहुलमन्यत्रापि ॥ २—९५ ॥

[9]अन्येष्वपि धातुषु बहुलं तृंस्तृचौ भवतः । प्रतिहर्ता ऋत्विग्विशेषः ॥

---

१. B omits भवति.

२. B omits च.

३. B adds तेन भाषायामपि.

४. B omits "शंस स्तुतौ"...... यथासंख्यं and reads instead "शसु स्तुतौ" "शासु अनिशिष्टौ" "शसु हिंसायाम्" "दसु" इति सौत्रो धातुः । "क्षुदिर् संपेषणे" "ष्टुञ् स्तुतौ" "भृञ् भरणे" "णीञ् प्रापणे" "कै गै शब्दे"

५. B omits इत्येतौ.

६. B adds शंसादिभ्यः.

७. C विषयेन.

८. B omits शास्ता........सारथिः but reads instead शंसादिभ्यः। क्षुदादिराकृतिगणः। शंस्ता । होता । शास्ता । पिता । भास्तौ (?) भवतः । दस्ता । क्षेत्ता प्रतिहारकः । क्षोद्धा मुसलः । स्तोता उपाध्यायः ॥

९. B The commentary on this sūtra runs as follows:- "हु दानादानयोः" "पूञ् पवने" बहुलमन्यत्रापि तृन्तृचौ भवतः । तावनिटौ भवतः ॥ होता ऋत्विक् ॥ पोता पोष्टा ॥ नेता बुद्धि-

स्तोता ॥ नेता सारथिः ॥ मन्ता स्तोता ॥ धर्ता विष्णुः ॥

---

## ॥ २४२ ॥ नप्तृनेष्टृत्वष्टृक्षत्तृ[1]होतृपोतृ[2]-जामातृ[3]पितृदुहितृ ॥ २—९६ ॥

ए[4]ते अन्तोदात्ता निपात्यन्ते। "णमु प्रह्वत्वे" अस्मात् तृच्। मकारस्य पकारः। **नप्ता** प्रपितामहस्य॥ नयतेः षुगागमः। **नेष्टा** ऋत्विग्विशेषः। "जेषृ णेषृ" इति नषतेस्तृचि इडभावे वा॥ "त्विष दीप्तौ" अस्मात्तृचि उपधाया

---

मान् ॥ सवनं धर्मः। "भृञ् भरणे" भर्ता स्वामी॥ "हृञ् हरणे" समाहरतीति समाहर्ता वैवस्वतः॥ "डु धाञ्" सन्निधाता॥ "धृञ् धारणे" धरत्येकार्णवे नारायणमिति धर्ता नागः शेषः॥

१. B omits -क्षत्तृ-

२. B adds -भ्रातृ-

३. B adds -मातृ-

४. B The commentary on this sūtra runs as follows:- "णमु प्रह्वत्वे" "णीञ् प्रापणे" "त्विष दीप्तौ" "क्षद" इति सौत्रो धातुः। "हु दाने" "पूञ् पवने" "माङ् माने" "दुह प्रपूरणे" नप्त्रादयः शब्दाः तृन्तृच्प्रत्ययान्ता निपात्यन्ते। मकारस्य च पकारः। नप्ता पौत्रापत्यम्।
"पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण। नाकपृष्ठे महीयते॥"
नेष्टा। गुणश्च निपात्यते। षुगागमः ष्टुत्वं च। नेष्टा उपाध्यायः। उपधाया आकारादेशः। त्वष्टा प्रजापतिः॥ क्षत्ता अग्निः रुद्रः मुसलं च॥ होता ऋत्विक्॥ पोता विष्णुः॥ जामाता दुहितृभर्ता॥ ह्रस्वं गुणाभावश्च निपात्यते। अति पुनाति रापिता (?) जनयिता॥ अडागमः। मानयति माता जननी॥ बिभर्तीति भ्राता सोदरः॥ दुहिता अपत्यम्॥ "ऋन्नेभ्यो ङीप्" इति ङीपि प्राप्ते "न षट्स्वस्रादिभ्यः" इति प्रतिषेधः। अविभक्तिनिर्देशः अन्येभ्योऽपि। "माङ् माने" माता॥ "भज सेवायाम्" भ्राता॥

अकारः, अनिट्त्वं च । त्वष्टा प्रजापतिः ॥ क्षदेः क्षत्ता रुद्रः मुसलश्च[1] ॥ होता ऋत्विग्विशेषः । अन्तोदात्तार्थमनयोः निपातनम् ॥ पुनातेः पवतेर्वा तृचि इडभावः । पोता ऋत्विग्विशेषः ॥ जापूर्वान्माङः तृच् । जामाता दुहितुः पतिः ॥ "पा रक्षणे" अस्मात्तृचि आकारस्येत्वम् । पिता जनकः रक्षिता च ॥ दुहेरिट् गुणाभावश्च । दोग्धि सर्वमर्थं पितुः सकाशात् दुहिता सुता ॥ नयतेः षुक् च । त्विषेर्देवतायां अकारश्च उपधायाः, अनिट्त्वं च । क्षदेश्च युक्ते, इति सिद्धत्वात् एतेषामपि ग्रहणमेवेत्याहुः ॥

---

## ॥ २४३ ॥ सुञ्यसेः ऋन् ॥ २—९७ ॥

"[2]असु क्षेपणे" अस्मात् सुञि उपपदे ऋन्प्रत्ययो भवति । सुञ्निपातः अवधारणवाचीत्याहुः[3] । स्वस्यतीति स्वसा भगिनी ॥

---

## ॥ २४४ ॥ यतेर्वृद्धिश्च ॥ २—९८ ॥

"[4]यती प्रयत्ने" अस्मात् ऋन्प्रत्ययो भवति, तत्सन्नियोगेन धातोरचो वृद्धिश्च । यतन्त इति यातरः भ्रातृवर्गस्य जाँयाः[5] ॥

---

## ॥ २४५ ॥ नञि च नन्देः ॥ २—९९ ॥

"टु नदि समृद्धौ" अस्मान्नञ्युपपदे ऋन्प्रत्ययो भवति, चकाराद्[6]वृ-

---

१. A मुसलं च.

२. A and B omit root and meaning.

३. B adds चस्य अगङ्गादेशः.

४. B The commentary on this sūtra reads as follows:- "यती प्रयत्ने" यतेः ऋप्रत्ययो वृद्धिश्चास्य भवति । ङीप्प्रत्ययस्य प्रतिषेधः । भ्रातृवर्गस्य जायाः गन्तारश्च ॥

५. A जाया.

६. B omits चका.....न नन्दतीति but reads instead वृद्धिश्चास्य । ङीप्प्रतिषेधः । "नलोपो नञः" इति नलोपः प्राप्तः । "उणादयो बहुलम्" इति बहुलवचनात् न भवति । नन्दतीति.

द्धिश्च । न नन्दतीति ननान्दा पत्युर्भगिनी । [1]नलोपो न भवति बाहुलकात्, स्वस्रादिनिपातनाद्वा ॥

## ॥ २४६ ॥ दिवेर्ऋः ॥ २—१०० ॥

" [2]दिवु क्रीडादौ " अस्मात् ऋप्रत्ययो भवति । दीव्यत इति **देवा** पत्युः कनीयान् भ्राता ॥

## ॥ २४७ ॥ नयतेर्डिच्च ॥ २—१०१ ॥

[3]नयतेः ऋन्प्रत्ययः डिच्च । डित्वाट्टिलोपः । नयतीति **ना** मनुष्यः ॥ [4]नयतेर्वृद्धिश्च । " णीञ् प्रापणे " अस्माद्दन्प्रत्ययः, ङीष्प्रत्ययश्च, डिच्च । डित्वाट्टि-लोपः । नयतीति नारी स्त्री ॥

## ॥ २४८ ॥ सव्ये स्थश्छन्दसि ॥ २—१०२ ॥

[5]तिष्ठतेः सव्यशब्द उपपदे छन्दसि विषये ऋन्प्रत्ययो भवति । सव्ये तिष्ठतीति **सव्येष्ठा** इन्द्रसारथिः । " अम्बाम्ब " इत्यादिना षत्वम् । " तत्पुरुषे कृति बहुलम् " इत्यलुक् ॥

---

1. B omits नलोपो........नाद्वा ॥
2. B The commentary on this sūtra reads as follows :- " दिवेरन्प्रत्ययो भवति । देवा पत्युः कनीयान् भ्राता ॥
3. B The commentary on this sūtra reads as follows :- "णीञ् प्रापणे" नयतेः ऋन्प्रत्ययो भवति डिच्च । ना नरौ नरः । पुरुषः । ऋन्प्रत्ययः । अरन्पक्षे नरः ॥
4. A and C omit नयतेः''' स्त्री.
5. B The commentary on this sūtra reads as follows :— " ष्ठा गतिनिवृत्तौ " सव्ये उपपदे " ष्ठा गतिनिवृत्तौ " इत्यस्मात् ऋन्प्रत्ययः । सव्ये शब्दे सप्तम्येकवचने प्रत्ययस्य " तत्पुरुषे कृति बहुलम् " इत्यलुक् । " अम्बाम्ब " इत्यादिना षत्वम् । सव्येष्ठा सारथिः प्रजापतिश्च ॥

## ॥ २४९ ॥ अर्तिसृधृधम्यश्यवतृभ्योऽनिः ॥ २—१०३ ॥

" ऋ गतौ " " सृ[1] गतौ " " धृङ् अवस्थाने " " धमिः " सौत्रः । " अशू व्याप्तौ " " अव रक्षणे[3] " " तॄ प्लवनतरणयोः[4] " एतेभ्यः अनिप्रत्ययो भवति । अर्यत इति **अरणिः** काष्ठविशेषः ॥ सरत्यनेनेति **सरणिः** पन्थाः सारथिः सिरासंघातः शीघ्रं च[2] ॥ ध्रियत इति **धरणिः** पृथिवी ॥ **धमनिः** सिराविशेषः ॥ अश्नुत इति **अशनिः** वज्रम् ॥ अवतीति **अवनिः** पृथिवी ॥ तरतीति **तरणिः** सूर्यः ॥

## ॥ २५० ॥ आङि शुचेः सनश्छन्दसि ॥ २—१०४ ॥

आङि उपपदे शुचेर्धातोः सन्नन्तात् छन्दसि विषयेऽनिप्रत्ययो भवति । आ शुशुक्षतीति **आशुशुक्षणिः** अग्निर्वायुश्च । भाषायामपि कवयः प्रयुञ्जते बाहुलकात् ॥

## ॥ २५१ ॥ कृषेरादेश्च चः ॥ २—१०५ ॥

" कृष[5] विलेखने " अस्मादनिप्रत्ययो भवति धातोरादेश्च चकारादेशः । **चर्षणी** सेना आयुः पुंश्चली मनुष्यश्च[6] ॥

---

१. B The commentary on this sūtra runs thus:— " हृञ् हरणे " " सृ गतौ " " धृञ् धारणे " " धम " इति सौत्रो धातुः । " अश भोजने " " अव रक्षणे " " तॄ प्लवनतरणयोः " एभ्यो निप्रत्ययः । अर्यत इति अरणिः आदित्यप्रभा यज्ञोपकरणं च ॥ हरतीति हरणिः ल्रोरः (?) ॥ सरत्यनेनेति सरणिः पन्थाः सारथिः सिरासंघातः शीघ्रम् ॥ ध्रियत इति धरणिः पृथिवी जलस्थानम् ॥ धमनिः सिराविशेषः ॥ अश्नुत इति अशनिः जलदवह्निः यज्ञं च ॥ अवतीति अवनिः पृथिवी ॥ तरतीति तरणिः सूर्यः । वै इत्युपपदे वैतरणिः नदी ॥

२,३,४. A and C omit the meanings.

५. A and C कृषेः.

६. A and C omit च.

## ॥ २५२ ॥ अदे[1]र्मुट् च ॥ २—१०६ ॥

"अद भक्षणे" अस्मादनिप्रत्ययो भवति प्रत्ययस्य मुडागमः । अ[2]त्तीति **अद्मनिः** अग्निः हस्ती च ॥

---

## ॥ २५३ ॥ वृतेश्च ॥ २—१०७ ॥

"वृतु वर्तने" अस्मादनिप्रत्ययो भवति । वर्तत इति **व[3]र्तनिः** पुरमार्गः देशनाम च । "स्तोत्रे वर्तनिः" उञ्छादित्वादन्तोदात्त[4]ः ॥

---

## ॥ २५४ ॥ क्षिपेः किच्च ॥ २—१०८ ॥

क्षिपेरनिप्रत्ययो भवति किच्च । कित्वात् गुणाभावः । क्षि[5]पतीति **क्षिपणिः** मत्स्यघाती प्रथमसंयोगश्च ।

---

## ॥ २५५ ॥ अर्चिशुचिहुसृपि[6]च्छर्दि[7]छादिभ्य[9] इसिः ॥ २—१०९ ॥

"अर्च पूजायाम्" चुरादिः भ्वादिश्च[8] । "शुच शोके" "हु दानादानयोः" "गमॢ सृपॢ गतौ" "छृ[10]दिर् दीप्तिदेवनयोः" "छद अपवारणे[11]" एभ्य इसिप्रत्ययो भवति । अर्च्यत इति **अर्चिः** ज्वाला ॥ शोचते दीप्यत इति **शोचिः** दीप्तिः[12] ॥ हूयते क्षिप्यते अग्नौ इति **हविः**[13] आज्यादिकम् ॥ सर्पति गच्छति अग्निसन्निधौ विलय[14]ते इति **सर्पिः** घृतम् ॥ **छ[15]र्दिः** वमनम् ॥

---

१. A and C अदेः.
२. B omits अत्तीति.
३. A and C वर्तनी.
४. A and C -दात्तत्वम्.
५. B क्षिपन्तीति.
६. B omits-छृदि-
७. B adds-छर्दि-
८. B omits चुरा........श्च.
९. A and C सृपिः गत्यर्थयः.
१०. B omits root and meaning.
११. B adds "छर्दि संदीपने"
१२. B adds पिङ्गलभावः शुद्धता च ॥
१३. B adds मन्त्रहुतम्.
१४. B वलयन्ते.
१५. B omits छर्दिः वमनम्.

छादेरिसिः "इस्मन्त्रक्विषु च" इति ह्रस्वत्वम्। छाद्यतेऽनेनेति छदिः वर्षातप-वारणम्[2] ॥

---

## ॥ २५६ ॥ बृंहेर्नलेपश्च ॥ २—११० ॥

"बृहि वृद्धौ" अस्मादिसिप्रत्ययो भवति, तत्सन्नियोगेन नलोपश्च। बृंहयति धर्मकृत्यानीति बर्हिः दर्भोऽग्निश्च ॥

---

## ॥ २५७ ॥ द्युतेरिसिन्नादेश्च जः ॥ २—१११ ॥

"द्युत दीप्तौ" अस्मादिसिन्प्रत्ययो भवति, धातोरादेश्च जकारादेशः। द्योतते इति ज्योतिः[5] दीप्तिः ॥

---

## ॥ २५८ ॥ वसौ रुचेः संज्ञायाम् ॥ २—११२ ॥

वसुशब्द उपपदे रुचेरिसिन्प्रत्ययो भवति संज्ञायां विषये। वसवो देवाः[6], तान्[7] रोचयतीति वसुरोचिः अग्निः ॥

---

## ॥ २५९ ॥ भुवः कित् ॥ २—११३ ॥

"भू सत्तायाम्" अस्मादिसिन्प्रत्ययो भवति किच्च। गुणाभावः। भवति जायते अस्मिन्निति भुविः शरत्[10] ॥

---

## ॥ २६० ॥ सहेर्ध च ॥ २—११४ ॥

"षह मर्षणे" अस्मादिसिन्प्रत्ययो भवति। तत्सन्नियोगेन धातोर्ध-

---

१. B omits छाद्यते........छदिः.
२. B adds छर्दिः वमनम्.
३. B adds बृह.
४. B omits भवति। धातोः.
५. B द्योतिः सूर्यः अग्निश्च.
६. B वेदाः.
७. B तेषु रोचतीति.
८. A and C भवतेरिसिन्.
९. B adds तेन.
१०. B adds शरीरं समुद्रश्च.
११. A and C सहेः.
१२. B omits भवति.

कार अन्तादेशः । सहत इति सघिः अग्निः आचार्यश्च[1] ॥

---

## ॥ २६१ ॥ पिबतेस्थुक्[2] च ॥ २—११५ ॥

"पा पाने" अस्मादिसिन्प्रत्ययो भवति धातोः थुगागमश्च[3] । पिबतीति **पाथिः** सूर्यः स्वर्गलोकः चन्द्रश्च ॥

---

## ॥ २६२ ॥ जनेरुसिः ॥ २—११६ ॥

"जनी प्रादुर्भावे" अस्मादुसिप्रत्ययो भवति[4] । जन्यत[5] इति [6]**जनुः** जननम् ॥

---

## ॥ २६३ ॥ मनेर्धश्छन्दसि ॥ २—११७ ॥

"मन ज्ञाने" अस्मादुसिप्रत्ययो[7] भवति छन्दसि । धकारश्चान्तादेशः[8] । **मधुः** क्षौद्रम् । "फलिपाटि" इत्यादिना उकारान्तोऽपि मधुशब्दो[9] निरुक्तः ॥

---

## ॥ २६४ ॥ अर्तिपृवपियजितनिधनित्रपिभ्यो नित् ॥ २—११८ ॥

"ऋ गतौ" "पृ पालनपूरणयोः" "डु वप् बीजसन्ताने" "यज[10] देवपूजासंगतिकरणदानेषु" "तनु विस्तारे" "धन धान्ये" "त्रपूष् लज्जायाम्" एभ्य उसिप्रत्ययो भवति[11] नित्त्व । तेना[12]द्युदात्तं[13] भवति । अर्यते इति **अरुः** व्रणम् आदित्यश्च ॥ **परुः** ग्रन्थिः ॥ उप्यतेऽस्मिन्निति **वपुः** शरी-

---

1. A and C omit आचार्यश्च.
2. A and C पिबतेः.
3. C omits च.
4. B omits भवति.
5. B जनयति.
6. B जनुशब्दो जन्मवाचीत्यपरे । यस्य पुंसानुजो जनुषान्ध इत्यलुग्विधीयते ॥
7. B अस्माद्धातोः छन्दसि विषये उसिप्रत्ययः ॥
8. B धश्च.
9. B मधुर-
10. C omits यज........धान्ये.
11. B omits भवति.
12. B omits तेना........वति ॥
13. B and C -दात्तत्वं.

रम् ॥ इज्यतेऽनेनेति यजुः ऋक्[1]साममन्त्राभ्यामन्यः ॥ तन्यतेऽनेनेति तनुः शरीरम् ॥ धनुः शर[2]ः ॥ त्रपत इति त्र[3]पुः सीसकम् ॥

## ॥ २६५ ॥ प्रेऽदः ॥ २—११९ ॥

"[4]अद भक्षणे" प्रशब्द उपपदे अदे[5]रुसिप्रत्ययो भवति । प्रादुस् प्राकाश्ये[6] । यथाकथंचित् व्युत्पत्तिः । सर्वथार्थानुगमो नास्ति निपातेषु । तत्रापि स्वरवर्णानुपूर्वीपरिज्ञानार्थं व्युत्पादनं[7] कार्यम् ॥

## ॥ २६६ ॥ एतेर्णिच्च ॥ २—१२० ॥

"इण् गतौ" अस्मादुसिप्रत्ययो भवति णिच्च । [8]णित्वात् वृद्धिः । [9]एति गच्छतीति आयुः जीवनपरिमाणम् ॥

## ॥ २६७ ॥ चक्षेः शिच्च ॥ २—१२१ ॥

"चक्षिङ् व्यक्तायां वाचि" अस्मादुसिप्रत्ययो भवति शि[10]च्च[11] । शित्वात् सार्वधातुकम् । तेनार्धधातुकनिबन्धनः ख्याआदेशो न भवति । चक्षुस् नयनम् । शित्करणं बहुलवचनस्यैव प्रपञ्चः । कृतवर्णानुपूर्वीका संज्ञेति ख्याआदेशो न भविष्यति ॥

## ॥ २६८ ॥ बहुलमन्यत्रापि ॥ २—१२२ ॥

[11]अन्यत्रापि उसिप्रत्ययादन्येष्वपि प्रत्ययेषु चक्षेः बहुलं शिद्भवति । विचक्षणः । न भवति आख्यानम् ॥

---

१. A and C omit ऋक्.
२. B आयुधम्.
३. B त्रपु.
४. A and C omit root and meaning.
५. B अस्मादुसि.
६. A प्राकाम्ये.
७. B -दनार्थं.
८. B omits णित्वात्.
९. B omits एति.
१०. A and B omit शिच्च.
११. B The commentary on this sūtra runs as follows :—चक्षेः शित्वं

## ॥ २६९ ॥ [1]मुहेः कित् ॥ २—१२३ ॥

"मुह वैचित्ये" अस्मादुसिप्रत्ययो भवति किच्च। **मुहुः** भूयः। चादिः ॥

---

## ॥ २७० ॥ कॄगॄशॄवृञ्चतिभ्यः ष्वरच् ॥ २—१२४ ॥

"कॄ विक्षेपे" "गॄ निगरणे" "शॄ हिंसायाम्" "वृञ् वरणे" "चते चदे याचने" एभ्यः ष्वरच्प्रत्ययो भवति। [3]षित्करणं ङीषर्थम्। किरतीति **कर्वरः** व्याघ्रः। कर्वरी व्याघ्री शिवा च॥ **गर्वरः** अहङ्कारः। गर्वरी सन्ध्या॥ **शर्वरः** चन्द्रः। शर्वरी रात्रिः॥ **वर्वरः** कुटिलप्रदेशः[4]। वर्वरी नदी[5] ॥ **चत्वरं** चतुष्पथम्। चत्वरी स्त्री ॥

---

## ॥ २७१ ॥ नौ सदेः ॥ २—१२५ ॥

[6]निशब्द उपपदे षदेः[7] ष्वरच्प्रत्ययो भवति[8]। निषीदत्यस्मिन्निति **निषद्वरः** कर्दमः कैन्दर्पश्च। निषद्वरी रात्रिः ॥

इतीन्दुग्रामसमीपवर्त्यग्रहारवास्तव्येन उत्तरमेर्वभिजनेन धर्मशास्त्रपार-
गार्यभट्टसूनुना गार्ग्येण श्वेतवनवासिनाम्ना
विरचितायामुणादिवृत्तौ द्वितीयः पादः



---

भवति। विपूर्वात् युच्प्रत्ययः अनादेशः। विचक्षणः निपुणः। बहुलवचनात् क्वचित् शित्वं न भवति। अपूर्वाच्चक्षिङो युच्। आख्यानं कथा ॥

1. B omits this sūtra and its commentary.
2. A and C कॄ गॄ शॄ वृञ् चतेः.
3. B चकारः स्वरार्थः। षकारो ङीषर्थः ॥
4. B adds समूहादेशश्च.
5. B adds स्त्री च.
6. B adds "षद्लृ विशरणादौ."
7. B अस्मात्.
8. B adds "सदिरप्रतेः" इति षत्वम्.
9. कामश्च.
10. B omits समीप........गार्ग्येण.
11. C धर्मवागार्य-

## ॥ अथ तृतीयः पादः ॥

---

### ॥ २७२ ॥ छित्वरछत्वरधीवरपीवरमीवर[1]चीवरतीवर-नीवरगह्वरकट्[2]वरसंयद्वराः ॥ ३—१ ॥

"छिदिर्[3] द्वैधीकरणे" "छद अपवारणे" "डु धाञ् दानधारणयोः" "पा पाने" ["प्यायी वृद्धौ"] "मीञ् हिंसायाम्" "चिञ् चयने" "तेवृ देवृ देवने" [तॄ प्लवनतरणयोः"] "णीञ् प्रापणे" "गाहू विलोडने" "कटे वर्षावरणयोः" "यम उपरमे" एभ्यः छित्वरादयः ष्वरच्प्रत्ययान्ता निपात्यन्ते। यदिह लक्षणेनानुपपन्नं त[4]त्सर्वं[5] निपातनात् भवति। समुदायस्य साधुत्वविधानं निपातनम्। अवयवा उन्नेयाः यत्र, समुदायः प्रत्यक्षः, तन्निपातनम्; समुदाय उ[6]न्नेयः, अवयवाः प्रत्यक्षा[7] यत्र[8], स मिधिः [विधिः]। छिदेः ष्वरच्, गु[9]णाभावः, दकारस्य तकारः। **छित्वरः**[10] कार्यातीतः[11]॥ छादेः ष्वरच्, ह्रस्वत्वं त[12]कारश्चान्तादेशः। छादयतीति **छत्वरः** निर्व्याधिः [13]ग्रहश्च ॥ धा[14]ञः ष्वरचि ईत्वम्। दधाति हिनस्तीति **धीवरः** मत्स्यघाती ॥ प्यायतेः ष्वरचि टेरीत्वम्। प्यायत इति[15] **पीवरः** स्थूलः ॥ [16]मिनातीति **मीवरः** हिंस्रः ॥ चिनोतेः ष्वरचि ईत्वम्। चिनोति छादयतीति[17] **चीवरं** भिक्षु[18]प्रावरणम् ॥ तरतेरीत्वं

---

१. B omits -चीवरतीवरनीवर-
२. B -संपद्वराः.
३. A and C omit छिदिर्...एभ्यः.
४. A omits तत्.
५. B omits तत्........नेयः
६. A समुदायं नेयः.
७. A प्रत्यक्षं.
८. C adds तत्र.
९. B अगुणत्वम्.
१०. B -रम्.
११. B -तम्.
१२. A छका-
१३. C गृहश्च.
१४. B omits धाञः.
१५. A and C omit इति.
१६. A and C add "मीङ् हिंसायाम्."
१७. A omits इति.
१८. B omits भिक्षु........नीवरः ॥

रपरत्वाभावश्च । तरति क्रामति वर्णाश्रमाचारानिति **तीवरः** म्लेच्छः[1] ॥ नयतीति **नीवरः** गम्भीरः । गुणाभावो निपात्यते ॥ गाहतेः ह्रस्वत्वम् । गाह्यते पर्वतवासिभिरिति **गह्वरं** गहनम् ॥[2] [3]कटति सिञ्चति वर्षमिति **कट्वरः** द्रववस्तु ॥ संपूर्वाद्यमेः[4] संयच्छतीति **संयद्वरः** । मकारस्य दकारः । [5]संयद्वरः [6]अनूपप्रदेशः ॥

---

## ॥ २७३ ॥ इण्सिञ्दीङुष्यविभ्यो नक् ॥ ३—२ ॥

"इण् गतौ[7]" "षिञ् बन्धने" "दीङ् क्षये[8]" "उष दाहे" "अव रक्षणे[10]" एभ्यो नक्प्रत्ययो भवति । एति गच्छतीति **इनः** आदित्यः[11] आत्मा स्वामी च ॥ सिनोति बध्नाति पुण्यापुण्यादिकमिति, सीयतेऽस्मिन्निति वा **सीनं** शरीरम् ॥ दीयते क्षिणोतीति **दीनः** कृपणः । दीङो निष्ठायां स्वादित्वादोदित्त्वे निष्ठानत्वे च कृते दीनसिद्धिः ॥ ओषतीति **उष्णं** तीव्रम्[12] ॥ अवतेः नकि "ज्वरत्वर" इति धातोरुपधायाश्च ऊठ् । **ऊनः** अपरिपूर्णः ॥ "ऊन परिहाणे" अतोऽपि कर्मणि घञि एरचि वा[13] ऊनशब्दसिद्धिः[14] ॥

---

## ॥ २७४ ॥ फेनमीनौ ॥ ३—३ ॥

[15]फेनमीनौ निपात्येते । "फण गतौ" "मीञ्[16] हिंसायाम्" आभ्यां[17]

---

१. A omits म्लेच्छः.

२. A and C "गाहू विलोडने" तस्य.

३. A and C add "कटे वर्षावरणयोः" ष्वरच्.

४. B adds मकारस्य च दकारः here and not later as in A and C.

५. B omits संयद्वरः.

६. B अन्तःप्रदेशः अनूपं च। एषां ङीप्, छित्वरी इत्यादि.

७,८,९ and १० A and C omit meanings.

११. B omits आदित्यः.

१२. B omits तीव्रम्.

१३. A omits वा.

१४. B शब्दः सिद्धः.

१५. B omits फेन........त्येते.

१६. A and C omit this root and meaning; B reads माङ् माने.

१७. A and C omit आभ्यां.

नक्[1]प्रत्ययो भवति, नकारलोपः, उ[2]पधाया एत्वं च[3]। **फेनं** जलदोषविशेषः ॥ [4]मीयत इति **मीनः** मत्स्यः ॥

---

## ॥ २७५ ॥ कृषेर्वर्णे ॥ ३—४ ॥

कृषेर्नक्प्रत्ययो भवति वर्णविशेषेऽभिधेये । कृषतीति **कृष्णः** वर्णविशेषः । [5]वर्णयोगात् [6]मृगविशेषश्च ॥

---

## ॥ २७६ ॥ [7]बन्धेः ब्रधिबुधी च ॥ ३—५ ॥

"[8]बन्ध बन्धने" तस्मान्नक्प्रत्ययो भवति । तत्सन्नियोगेन धातोः ब्रध बुध इत्येतावादेशौ[9] भवतः । बध्नातीति **ब्रध्नः** आदित्यः ॥ [10]**बुध्नः** अवाग्भागः[11] रुद्रः स्वर्गलोकश्च[12] ॥

---

## ॥ २७७ ॥ धापॄवस्यज्यतिभ्यो नः ॥ ३—६ ॥

"डु धाञ् [13]दानधारणयोः" "धेट् [14]पाने" वा "पॄ [15]पालनपूरणयोः" "वस निवासे" "वस[16] आच्छादने" वा[17] "अज गतिक्षेपणयोः" "अत सातत्यगमने" एभ्यो नप्रत्ययो भवति । कित्कार्यं मा भूदिति प्रत्ययान्तरविधानम् । दधति पीयन्तेऽस्मिन्निति **धानाः** भ्रष्टतण्डुलविशेषाः ॥ पृणातीति **पर्णं** दलम् ॥ [18]वसन्त्यस्मिन्ननेन वा[19] **वस्नं** [20]द्रव्यम् ॥ अजति गच्छतीति

---

१. B omits प्रत्ययो भवति.
२. B omits उपधायाः.
३. B omits च.
४. A and C add मीञ्.
५. B omits this word.
६. B विष्णुश्च.
७. A and C बधे.
८. A and C बधेर्नक्.
९. C adds च.
१०. A and C omit बुध्नः.
११. B -भावः.
१२. A and C add बुध्नः and in C there is a lacunae after the word.
१३,१४,१५. A and C omit the meanings.
१६. B omits root and meaning.
१७. B omits वा.
१८. A and B वसति.
१९. B इति.
२०. B omits द्रव्यम्.

वेनः प्रजापतिः अजः अविद्वांश्च ॥ [1]अतेर्नः । अततीति अन्नः आत्मा वायुश्च । अपदान्तत्वात् जश्त्वानुनासिकयोरभावः ॥

## ॥ २७८ ॥ पणेरिच्चोपधायाः ॥ ३—७ ॥

" पैण व्यवहारे " नप्रत्ययः । [2][3]तत्सन्नियोगेन धातोरुपधाया इकारश्च[4] । पणायत्यमुमिति पिण्णः तिलकल्कम्[5] ॥

## ॥ २७९ ॥ लक्षेरट्[6] च ॥ ३—८ ॥

" लक्ष दर्शनाङ्कनयोः " अस्मान्नप्रत्ययो भवति । तत्सन्नियोगेन प्रत्ययस्याडागमः[7] । लक्ष्यतेऽनेनेति लक्षणं चिह्नम्[8] । ल्युटि च रूपस्य सिद्धत्वात् अनर्थकम् । नानर्थकम्[9], स्वरार्थत्वात् ॥

## ॥ २८० ॥ सिवेष्टेर्यू च ॥ ३—९ ॥

" षिवु तन्तुसन्ताने " अस्मान्नप्रत्ययो भवति । तत्सन्नियोगेन धातोः टेः यूइत्ययमादेशो भवति[10] । सीव्यत इति स्यूना रशना[11] रश्मयश्च । सिवेः किदित्येव सिद्धे टेर्यूभावविधानमनर्थकम् ॥

## ॥ २८१ ॥ [12]कॄपॄवृञ्जॄसिद्रुपन्यनिस्वपिभ्यो नित् ॥ ३—१० ॥

" कॄ विक्षेपे[13] " " पॄ पालनपूरणयोः[13] " " वृञ् वरणे[13] " " जॄ वयो-

१. B omits अतेर्नः.
२. A and C पणेर्नप्रत्ययो भवति.
३. B omits तत्........धातोः.
४. B इच्च.
५. B -कल्पः.
६. A मुच् च.
७. A adds च.
८. A omits चिह्नम्.
९. A and C omit नानर्थकम्.
१०. A and B omit भवति.
११. B omits रशना.
१२. A कॄपॄजॄवृञ्-
B कॄवॄजॄसि-
C कॄपॄजॄहञ्
१३. A and C omit meaning.

हानौ[1]" "षिञ् बन्धने[2]" "द्रु गतौ" "[3]पैण व्यवहारे" "अन प्रा[4]णने" "स्वपि" इत्येतेभ्यो नप्रत्ययो भवति नित्त्व। [5]नित्वादाद्युदात्तत्वम्। तदन्तस्य भवति "सौवर्यः सप्तम्यस्तदन्तसप्तम्यः" इति। किरति शृणोति अनेनेति **कर्णः**। किरतीति वा कर्णः महाभारते प्रसिद्धः॥ पृणातीति **पर्णम्**। स्वरार्थं पुनर्व्युत्पादनम्॥ व्रियत इति **वर्णः** ब्राह्मणादिः॥ जृणातीति **जर्णः** वृक्षविशेषः वज्रं वृद्धश्च॥ सिनोत्यनयेति **सेना** जनसमूहः॥ द्रवतीति **द्रोणः** महाभारते प्रसिद्धः। द्रू[6]यते मीयतेऽनेनेति वा द्रोणः मानविशेषश्च[7]॥ पनतेरायप्रत्ययाभावे **पन्नं** पादं मानं च। पद्यतेः निष्ठायां पन्नशब्दस्य सिद्धत्वात् स्वरार्थं पुनर्व्युत्पादनम्॥ अनिति श्वसिति अनेनेति **अन्नम्**। "अदोऽनन्ने" इति निपातनात् यः [दः] सभावे [नभावे] रूपस्य सिद्धत्वात् स्वरार्थं व्युत्पादनम्[9]॥ स्वपेर्नः। [10]**स्वप्नः** स्वापः समुद्रः। "स्वपो नन्" इति सिद्धत्वात् पुनर्व्युत्पादनं न कर्तव्यमिति केचित्[11]॥

---

## ॥ २८२ ॥ धेट ई च ॥ ३—११ ॥

धेटो नप्रत्ययो भवति ईकारश्चान्तादेशः। गुणः[12]। धीयते पीयत इति विपरीतार्थवृत्तित्वमपि निर्वचनोपायः। तेन पीयत इति **धेनः** समुद्रः[13]॥

---

## ॥ २८३ ॥ तृषिशुषिरसिभ्यः कित् ॥ ३—१२ ॥

---

१.२. A and C omit the meaning.
३. A and C पनि.
४. B omits प्राणने..........तेभ्यो and has instead च ञिष्वच्छये एभ्यः.
५. B omits नित्वा........सप्तम्य इति.
६. B द्रवते.
A दूयते.
७. C -षो वा.
B षाद्वा.
८. A and C पद्मं.
९. B निर्वचनम्.
१०. B omits स्वप्नः......मुद्रः.
११. A शेषः कश्चित्
१२. B omits गुणः.
१३. B omits समुद्रः.

"ञि तृषा पिपासायाम्" "शुष शोषणे" "रस आस्वादने" एभ्यो नप्रत्ययो भवति किच्च। **तृष्णा** पिपासा॥ शोषयतीति **शुष्णः** आदित्यः कुक्षिश्च॥ रसयति भक्षयतीति[1] **रस्नः** अश्वः दण्डश्च। नक्प्रकरणे "तृषिशुषि[2]रसिभ्यः" इति सिद्धे आद्युदात्तार्थं पुनर्वचनमिति केचित्॥

---

## ॥ २८४ ॥ सुञो दीर्घश्च ॥ ३—१३ ॥

सुञो नप्रत्ययो भवति किच्च, धातोर्दीर्घश्च। सूयते हन्यते[3] अस्मिन्निति **सूना** वध्यस्थानं दुहिता च॥

---

## ॥ २८५ ॥ रमेस्त च ॥ ३—१४ ॥

रमेर्नप्रत्यो भवति [4]तकारश्चान्तादेशः। रमयतीति **रत्नम्** सर्वेषामुत्तमं मणिविशेषश्च॥

---

## ॥ २८६ ॥ रास्नासास्नास्थूणावीणाः ॥ ३—१५ ॥

रास्नादयो नप्रत्ययान्ता निपात्यन्ते। रसेरुपधाया दीर्घत्वं नप्रत्ययश्च[6]। **रास्ना** धेनुः गन्धद्रव्यं च॥ "सस[7] स्वप्ने" ससेरुपधाया दीर्घत्वम्, **सास्ना** गोग्रीवाचर्म॥ तिष्ठतेरूकारः। स्थीयतेऽनयेति **स्थूणा** स्तम्भः॥ अजेर्नप्रत्ययः वीभावः[8] णत्वं च। **वीणा** पञ्चतन्त्री।

> "वीणां विपञ्चीं ब्रुवते[9] वल्लकीं च विपश्चितः।
> तन्त्रीभिः स्वरसङ्ख्याभिः तामेव परिवादिनीम्॥"

---

1. B omits भक्षयति.
2. A and C omit-शुषि-
3. A and B नह्यते.
4. B omits तकारश्चान्तादेशः.
5. A and C रमे-
6. A -प्रत्ययस्त्वं,
7. A and B षस.
8. A and C omit वीभावः.
9. A and B omit ब्रुवते.

## ॥ २८७ ॥ गादाभ्यां [1]चेष्णुच् ॥ ३—१६ ॥

गामादाग्रहणेष्वविशेषात् सर्वेषां ग्रहणम् । गादाभ्यामिष्णुच्प्रत्ययो भवति । चकारात् "चितः" इत्यन्तोदात्तत्वम्[2] । गायतीति **गेष्णुः** पङ्गुः ॥ ददातीति **देष्णुः**[3] दानशीलो यजमानश्च ॥

---

## ॥ २८८ कृत्यशूभ्यां क्स्नः ॥ ३—१७ ॥

"कृती वे[4]ष्टने" "अशू [4]व्याप्तौ" आभ्यां क्स्नप्रत्ययो भवति । **कृत्स्नं** निरवशेषं रूढित्वात् । सर्वथा[5]र्थानुगमो नास्ति ॥ अश्नोतेः क्स्नप्रत्ययै[6]ः । व्रश्चादिना षकारे "षढोः कस्सि" इति [7]कत्वे षत्वे च **अक्ष्णः** खण्डं[9] साधनं[10] च ॥

---

## ॥ २८९ ॥ तिजेर्दीर्घश्च ॥ ३—१८ ॥

"तिज निशाने" अस्मात् क्स्नप्रत्ययो भवति, धातोरचो दीर्घश्च भवति । तेजै[11]यतीति **तीक्ष्णं** निशितम् ॥

---

## ॥ २९० ॥ श्लिषेरच्चोपधायाः ॥ ३—१९ ॥

"श्लिष आलिङ्गने" "श्रिषु श्लिषु प्लुषु दाहे" वा । अस्मात् क्स्नप्रत्ययो भवति उपधाया अकारश्च । श्लिष्यतीति **श्लक्ष्णम्** । "षढोः कस्सि" इति कै[12]त्वं णत्वं षत्वं च । निबिडम् ॥

---

१. B omits च.
२. B -दात्तार्थः.
३. B adds सुरूपः.
४. A and C omit the meanings.
५. A -सर्वार्थानु-
६. A and B प्रत्यये.
७. B कत्वषत्वे.
८. A खण्डः.
९. B साधनः.
१०. A and C omit भवति.
११. B तेजतीति.
१२. A कत्वे.

## ॥ २९१ ॥ यजिमनिशुन्धिदसिजनिभ्यो युः ॥ ३—२० ॥

"यज देवपूजादौ" "मन ज्ञाने[2]" "शुन्ध शुद्धौ" "दसु उपक्षये" "जनी प्रादुर्भावे" एभ्यो युप्रत्ययो भवति । यकारस्यानुनासिकत्वाप्रतिज्ञानात् योरनो न भवति[6] । यजतीति यज्युः अध्वर्युः[7]॥ मन्यते क्रुद्धः अनेन ज्ञायत इति मन्युः क्रोधः ॥ शुन्धत इति शुन्ध्युः अर्हः ॥ उपक्षिणोतीति अन्तर्भावितण्यर्थात्[10] दस्यतेः युः । दस्युः चोरः ॥ जायत इति जन्युः प्राणी ॥ बाहुलकादजेरपि युः । "वा यौ" इति वादेशः । वायुः इति प्रथमसूत्रे [11]दर्शितम् ॥

---

## ॥ २९२ ॥ भुजिमृङ्भ्यां युक्त्युकौ ॥ ३—२१ ॥

"[12]भुज पालनाभ्यवहारयोः" "मृङ् प्राणत्यागे" आभ्यां यथासङ्ख्यं युक् त्युक् इत्येतौ प्रत्ययौ भवतः । भुनक्ति पालयतीति भुज्युः आदित्यः[13] ॥ मारयतीति मृत्युः प्राणवियोगः ॥

---

## ॥ २९३ ॥ सर्तेरयुः ॥ ३—२२ ॥

"सृ[14] गतौ" अस्मादयुप्रत्ययो भवति[15] । [16]सरति धावतीति सरयूः । "अप्राणिजातेश्च" इत्यूङ्प्रत्ययः । सरयूः नदीविशेषः ॥

---

## ॥ २९४ ॥ पानीविषिभ्यः पः ॥ ३—२३ ॥

"पा पाने" "णीञ्" "विषॢ व्याप्तौ" एभ्यः पप्रत्ययो भवति ।

---

१. B युच्.
२,३. A and C omit meaning.
४. B युच्.
५. A and C add इति.
६. B -कत्वात्.
७. B omits the word.
८. B omits क्रोधः.
९. B अनश्यति.
१०. B -ण्यर्थः.
११. B प्रदर्शितम्.
१२. A and C भुजेः मृङो यथा-
१३. B omits the word.
१४. A and C सर्तेः अयु-
१५. A omits भवति.
१६. B and C omit सरति.

पिबतीति[1] **पापं** मलम् ॥ नयतीति **नेपः** पुरोहितः ॥ वेवेष्टि व्याप्नोतीति[2] **वेष्पं** जलं[3] कूपं च ॥

---

## ॥ २९५ ॥ च्युवः किद्दीर्घश्च[4] ॥ ३—२४ ॥

"च्युङ् गतौ" अस्मात् पप्रत्ययो भवति धातोर्दीर्घश्च[5]। प्रत्ययः[6] किच्च भवति। च्यवते अस्मादिति **च्यूपः** संग्रामो वायुश्च[7] ॥

---

## ॥ २९६ ॥ स्त्यस्संप्रसारणमुश्च ॥ ३—२५ ॥

"स्त्यै ष्ट्यै संघातशब्दयोः" अस्मात् पप्रत्ययो भवति, तत्सन्नियोगेन धातोर्यणः स्थाने[8] उकारादेशः संप्रसारणसंज्ञो भवति। यकारस्य स्थाने विधीयमानोऽपि वचनादुकारः संप्रसारणसंज्ञकः[9]। तेन "संप्रसारणाच्च" इति पूर्वपरयोः पूर्वरूपं[10] भवति। दीर्घग्रहणमनुवर्तते। स्त्यायते संहन्यत इति **स्तूपः** समुच्छ्रायः संग्रामो वायुश्च ॥

---

## ॥ २९७ ॥ सुशृभ्यां निच्च ॥ ३—२६ ॥

"षुञ् अभिषवे" "शॄ हिंसायाम्" आभ्यां पप्रत्ययो भवति निच्च[11]। चकारात् दीर्घश्च। **सूपः** मुद्गभित्तेर्यत् क्रियते शुल्का[12] संकीर्त्यते ॥ [13]शीर्यते पूयते अनेनेति **शूर्पः** परिपवनम्[14] ॥

---

## ॥ २९८ ॥ कुयुभ्यां च ॥ ३—२७ ॥

---

१. B पातीति.
२. A omits व्याप्नोतीति.
३. A and C omit जलं.
४. B किच्च.
५. A and C omit च.
६. B omits प्रत्ययः.
७. B omits च.
८. B उश्चान्तादेशः। सन्वासं- (?)
९. A and C संज्ञः.
१०. A रूपत्वं.
११. A and C सुञः शृणातेश्च.
१२. C शुल्मा.
१३. A and C omit शीर्यते.
१४. A and C add शङ्करायनम् [सङ्करापनयनम्]

[1]दीर्घ इत्येव । "कु शब्दे" "यु मिश्रणे" आभ्यां पप्रत्ययो भवति नित्त्व । तत्सन्नियोगेन तयोः दीर्घः । कूयत इति **कूपः** अन्धुः ॥ **यूपः** यज्ञकाष्ठम् ॥

---

## ॥ २९९ ॥ खष्पशिष्पश[2]ष्पबाष्पपर्परूपतल्पाः ॥ ३—२८ ॥

खष्पादयः पप्रत्ययान्ता निपात्यन्ते । खनेष्षकारः । खन्यतेऽनेनेति **खष्पः** बलात्कारः ॥ "शिषॢ विशेषणे" पप्रत्ययः गुणाभावश्च[3] । विशिनष्टीति **शिष्पः** कालयोगः ॥ "शसु हिंसायाम्" शस्यते हिंस्यते[4] इति **शष्पं** बाल-तृणम् ॥ "वा गतिगन्धनयोः" वातेः षुक्, बकारः । वातीति **बाष्पं** मुखनिः-श्वासः ॥ पृणातेः **पर्पं** ग्रीवा[5][6] ॥ रौतेः पः दीर्घश्च । **रूपं** शुक्लादिः । "रूप रूपक्रिया-याम्" इत्यतोऽपि रूपमिति सिद्धम् ॥ "तल प्रतिष्ठाकरणे" **तल्पं** शयनीयम् ॥

---

## ॥ ३०० ॥ स्तनिहृषिपुषिशु[7]षिगदिभ्यो णेरित्नुच् ॥ ३—२९ ॥

"स्तनगदी देवशब्दे" चुरादिरदन्तः । देवशब्दो मेघशब्दः । प्रथमाद्विवचनेन 'स्त[8]नगदी' इति निर्देशो वैचित्र्यार्थः । "हृष तुष्टौ" "हृषु अलीके" वा "पुष पुष्टौ[9]" भौवादिकः क्रैयादिकः दैवादिकश्च । "शुष शोषणे" "[10]गदि देवशब्दे" "[11]मदी हर्षे" एभ्यो ण्यन्तेभ्यः इत्नुच्प्रत्ययो भवति । स्तनयतीति **स्तनयित्नुः** मेघः । णेरयादेशः ॥ हर्षयतीति **हर्षयित्नुः** हिरण्यम् ॥ पोषयतीति **पोषयित्नुः** कोकिलः ॥ शोषयतीति **शोषयित्नुः** आदित्यः[12] ॥ गदयतीति **गदयित्नुः** वावदूकः ॥ मदयतीति **मदयित्नुः** शीधुः[13] ॥

---

१. A omits this sentence.
२. A omits -शष्पबाष्प-
३. B omits च.
४. A and C omit हिंस्यते.
५. B omits बालतृणं........वातीति and has instead धातोः षुक् यकारादेशश्च । पातीति.
६. A and C omit ग्रीवा.
७. B omits -शुषि-
८. B omits स्तन-
९. A and B तुष्टौ.
१०,११. B omits root and meaning.
१२. A and C omit आदित्यः.
१३. B omits शीधुः.

## ॥ ३०१ ॥ कृहनिभ्यां क्नुः[1] ॥ ३—३० ॥

"डुकृञ् करणे" "हन हिंसागत्योः" आभ्यां क्नुप्रत्ययो भवति। करोतीति **कृणुः** शिल्पिविशेषः॥ हन्यत इति **हनुः** कपोलप्रदेशः। "धान्ये नित्" "शृस्वृस्निहि" इत्यादिना पूर्वं व्युत्पादितो हनुः आद्युदात्तः[2]॥

## ॥ ३०२ ॥ गमेस्सन्वच्च[3] ॥ ३—३१ ॥

"गम्लृ गतौ" अस्मात् क्नुप्रत्ययो भवति, तस्मिन् सनीवकार्यं भवति द्विर्वचनमित्वं च। गच्छतीति **जिगनुः** अग्निः प्राणश्च। क्नुप्रत्यये[4] "अनुदात्तोपदेश[5]" इत्यादिनाज्झलादावपि बाहुलकादनुनासिकलोपः॥

## ॥ ३०३ ॥ दाभाभ्यां नुः[6] ॥ ३—३२ ॥

"डुदाञ् दाने" "भा दीप्तौ" आभ्यां नुप्रत्ययो भवति। ददातीति **दानुः** पात्रेभ्यो दाता वायुश्च[7]॥ भातीति **भानुः** आदित्यः॥

## ॥ ३०४ ॥ वचेर्गश्च[8] ॥ ३—३३ ॥

"वच परिभाषणे" अस्मान्नुप्रत्ययो भवति गकारश्चान्तादेशः। ब्रवीतीति **वग्नुः** वावदूकः विप्रलापी[9] च॥

## ॥ ३०५ ॥ धेट इच्च ॥ ३—३४ ॥

"धेट्[11] पाने" अस्मान्नुप्रत्ययो भवति। तत्सन्नियोगेन धातोरिकार अन्तादेशः। धीयते पीयते वत्सेनेति **धेनुः** नवसूता॥

---

१. A and C कृहनिभ्यां क्नु-
२. A and B नाद्युदात्तः.
३. A and C गमेः.
४. A and C प्रत्ययः
५. A -पपदे.
६. A and C दाभाभ्यां.
७. A and C omit च.
८. A and C वचेः.
९. B गश्चा-
१०. B प्रला-
११. A and C धेटः.

॥ ३०६ ॥ सुवेः कित् ॥ ३—३५ ॥

"षू[1] प्रेरणे" "षूञ्[2] प्राणिप्रसवे" वा । तस्मान्नु[3]प्रत्ययः किच्च भवति । सूयते सुवति वा सूनुः पुत्रः ॥

---

॥ ३०७ ॥ जहातेर्द्वे[4] चान्त्य लोपश्च ॥ ३—३६ ॥

"ओ हाक् त्यागे" अस्मान्नुप्रत्ययो भवति, धातोः द्विवचनं च, अकार-लोपश्च । जहाति [5]संसारमिति जह्नुः [6]कश्चिदृषिविशेषः ॥

---

॥ ३०८ ॥ स्थाणुः ॥ ३—३७ ॥

[7]स्थाणुरिति निपात्यते । तिष्ठतेः णुप्रत्ययः । तिष्ठतीति स्थाणुः परमेष्ठी वृक्षश्च ॥

---

॥ ३०९ ॥ अजिवृरीभ्यो नित्[8] ॥ ३—३८ ॥

"अज[9] गतिक्षेपणयोः" "वृङ् संभक्तौ" "रीङ् स्रवणे" एभ्यो णुप्रत्ययो भवति [10]नित्च । अजेर्वीभावः । अजति गच्छति[11] वायुवेगेन चलतीति वेणुः कीचकः ॥ व्रियतेऽनेनेति वर्णुः आदित्यः नदी शरीरं च ॥ रीयत इति रेणुः रजः ॥

---

॥ ३१० ॥ विषेः किच्च ॥ ३—३९ ॥

"विषॢ व्याप्तौ" अस्मान्नुप्रत्ययो भवति किच्च । वेवेष्टि व्याप्नोति सर्वमिति विष्णुः परमेश्वरः ॥

---

१. A सुनः.
२. A षुञ्.
   C षूङ्.
३. B अस्मात्.
४. B अन्त-
५. A संसरतीति.
६. A omits केश्चि........षः.
७. A omits स्थाणुः........स्थाणुः.
८. B adds च.
९. A and C अजिवृभ्य्.
१०. B omits निच्च..........भवति in the commentary on the next sūtra.
११. A adds इति.

## ॥ ३११ ॥ कृदाधारार्चिकलिभ्यः कः ॥ ३—४० ॥

"डु[१] कृञ् करणे" "डु दाञ् दाने" "डु धाञ् दानधारणयोः" "रा आदाने" "अर्च पूजायाम्" भूवादिः चुरादिश्च । "कल[२] विक्षेपणे" एभ्यः कप्रत्ययो भवति । ककारस्येत्संज्ञा न भवति बाहुलकात् । **कर्कः[३]** श्वेताश्वः अग्निश्च ॥ ददातीति **दाकः** यजमानः ॥ दधातीति **धाकः** ओदनः अनड्वांश्च ॥ राति आदत्त इति **राकः** आतपः पौर्णमासी च ॥ अर्च्यत इति **अर्कः** आदित्यः । "अर्क स्तवने" इत्यस्यापि पचाद्यचि अर्कः ॥ कल्यते[४] क्षिप्यत इति **कल्कं** पापम् ॥

---

## ॥ ३१२ ॥ सृवृभूशुषिमुषिभ्यः कित्[५] ॥ ३—४१ ॥

"सृ गतौ[६]" "वृञ् वरणे[६]" "भू सत्तायाम्[६]" "शुष शोषणे[६]" "मुष स्तेये[६]" एभ्यः[७] कप्रत्ययो भवति किच्च[८] । कित्वात् गुणाभावः । सरति गच्छतीति **सृकः** शरः निरामयश्च ॥ [९]वृणोतीति **वृकः** आदित्यः श्वापदश्च ॥ **भूकः** चिलम् ॥ **शुष्कः** नीरसः । शुषेः निष्ठायामापि शुष्कः ॥ **मुष्कः** पीनः वृषणं च ॥

---

## ॥ ३१३ ॥ शुकवल्कोल्काः ॥ ३—४२ ॥

"शुभ शुम्भ शोभार्थे" अस्मात् कप्रत्ययो निपात्यते । शुभेर्भकारलोपः । शोभते[१०] इति **शुकः** कीरः ॥ "वस आच्छादने" सकारस्य लकारः । **वल्कः** त्वक् । "वल वल्ल संवरणे" संव्रियतेऽनेनेति वल्कम् । "उष दाहे" अस्मात् कप्रत्ययः, षकारस्य लकारः गुणाभावश्च । **उल्का** ज्वाला ॥

---

१. A and C कृञ् दाञ् धाञ्.
२. B adds किल.
३. A and C कर्किः.
४. B कल्प्यते.
५. B वक्.
६. A and C omit the meanings.
७. B adds धातुभ्यः.
८. B omits किच्च.
९. B omits वृणोति........वृषणं च.
१०. A and C have शोभत इति before शुभेः.

## ॥ ३१४ ॥ इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥ ३—४३ ॥

"इण् गतौ" "ञि भी भये" "कै गै[2] शब्दे" "पा पाने" "शल हुल पतॢ गतौ" "अत सातत्यगमने" "मर्चिः" सौत्रः। केचित् भूवादौ मर्चति छतिकर्माणमाहुः। ईयते संख्यायत इति **एकः** संख्यावाची॥ बिभेतीति **भेकः** मण्डूको मेघश्च॥ कायति शब्दयतीति[3] **काकः** वायसः॥ पिबति पाति वा **पाकः** पर्वतविशेषः गन्धर्वविशेषश्च[4]। "अर्भकपृथुकपाका वयसि" इति वयसि व्युत्पादयिष्यते। ततोऽन्यत्रापि यथा स्यादिति पुनर्व्युत्पादनम्॥ शलतीति **शल्कः** मधुरवाक् मुद्गरश्च[5]॥ अततीति **अत्कः** चन्द्रमाः॥ **मर्कः** वायुः मनश्च॥

## ॥ ३१५ ॥ नौ हः ॥ ३—४४ ॥

निशब्द उपपदे जहातेः कन्प्रत्ययो भवति। निजहातीति **निहाका** गोधिका॥

## ॥ ३१६ ॥ स्यम ईट् च ॥ ३—४५ ॥

"स्यमु स्वन ध्वन शब्दे" अस्मात् कन्प्रत्ययो भवति, प्रत्ययस्य ईडागमश्च। स्यमतीति[6] **स्यमीकः** मेघः वल्मीकः मकरश्च॥

## ॥ ३१७ ॥ अजियुधूनीभ्यो दीर्घश्च ॥ ३—४६ ॥

"अज गतिक्षेपणयोः[7]" "यु मिश्रणे" "धू विधूनने" "णीञ्" एभ्यः कन्प्रत्ययो भवति, तत्सन्नियोगेन एषां दीर्घश्च। [8]दीर्घवचनसामर्थ्यात्

---

1. A and C omit meaning.
2. A and B omit गै.
3. A शवतीति.
4. B omits विशेषः.
5. B मुद्गरं च.
6. B omits स्यमतीति.
7. A and C omit meaning.
8. B omits दीर्घ-

गुणो न भवति। गुणनिवारणाय दीर्घान्तानामपि[1] दीर्घः[2]। अजेर्वीभावः। **वीका** अक्षिमलम् ॥ **यूका** कृमिः ॥ **धूका** कालकः ॥ [3]नयतीति **नीका** द्यूतम् ॥

## ॥ ३१८ ॥ ह्रियो रश्च लो वा ॥ ३—४७ ॥

"ह्री लज्जायाम्" अस्मात् कन्प्रत्ययो भवति। तत्सन्नियोगेन रेफस्य वा लकारो भवति। जिह्रेतीति **ह्रीकः ह्लीकः** पिता नकुलश्च ॥

## ॥ ३१९ ॥ शकेरुनोन्तोन्त्युनयः ॥ ३—४८ ॥

"शकॢ शक्तौ" अस्मात् उन उन्त उन्ति उनि इत्येते प्रत्यया भवन्ति। शक्नोति वेगं[4] गन्तुमिति **शकुनः शकुन्तः शकुन्तिः शकुनिः** पक्षी ॥

## ॥ ३२० ॥ भुवो झिच् ॥ ३—४९ ॥

भवतेर्धातोः झिच्प्रत्ययो भवति। "झोऽन्तः" इति झकारमात्रस्यान्तादेशः। भवतीति **भवन्तिः** कालः ॥

## ॥ ३२१ ॥ कन्युच्च क्षिपेः[5] ॥ ३—५० ॥

क्षिपेर्धातोः[6] कन्युच्प्रत्ययो भवति। चकारात् भवतेश्च। क्षिपतीति **क्षिपण्युः** वायुपर्वतवसन्ताः ॥ भुवन्युः अग्निचन्द्रमरुतः, रुरुविषाणिगरुडाश्च[7] ॥

## ॥ ३२२ ॥ चनुङ् नुदेश्च ॥ ३—५१ ॥

"नुद प्रेरणे" अस्माच्चनुङ्प्रत्ययो भवति। चकारः स्वरार्थः।

---

१. B omits दीर्घान्तानामपि.
२. B adds च.
३. B omits नयतीति.
४. B गगनं.
५. B adds च.
६. B omits धातोः.
७. A -षाण-

ङ्कारो गुणनिषेधार्थः[1] । नुदनुः वायुः ॥ चकारात् क्षिपेश्च । क्षिपणुः मेघः दुन्दुभिश्च ॥

---

## ॥ ३२३ ॥ कृवृतॄ[2]दारिभ्य उनन् ॥ ३—५२ ॥

किरतेः वृणोतेः तरतेः दृणातेर्ण्यन्ताच्च उननप्रत्ययो भवति । **करुणः** दयावान् ॥ वृ[3]णोतीति **वरुणः** पश्चिमाशापतिः ॥ तरतीति **तरुणः** युवा ॥ दारयतीति **दारुणः** क्रूरात्मा ॥

---

## ॥ ३२४ ॥ त्रो रश्च लो वा ॥ ३—५३ ॥

तरतेः उनन्प्रत्ययो भवति, रेफस्य लकारो वा । **तरुणः तलुनः** ॥

---

## ॥ ३२५ ॥ क्षुधिपिशिमिथिभ्यः कित् ॥ ३—५४ ॥

"क्षुध बुभुक्षायाम्" "पिश अवयवे" "मिथृ मेथृ संगमे च" एभ्य उनन्प्रत्ययो भवति किच्च । कित्वात् गुणाभावः । **क्षुधुनः** बुभुक्षावान् ॥ **पिशुनः** सूचकः ॥ **मिथुनं** द्वयसंयोगः ॥

---

## ॥ ३२६ ॥ अशेर्लश च ॥ ३—५५ ॥

"अश भोजने" अस्मादुनन्प्रत्ययो भवति । तत्सन्नियोगेन धातोः लश इत्यर्यं[4]मादेशो भवति । अश्यत इति **लशुनं** पलाण्डुजातिः । अन्ये "अशेरादेश्च लः" इति पठन्ति । तेषामपि लशुनमित्युदाहरणम् ॥

---

## ॥ ३२७ ॥ अर्जेर्णिलुक् च ॥ ३—५६ ॥

"[5]अर्ज प्रतियत्ने" "अर्ज सर्ज अर्जने" वा । तस्माण्ण्यन्तादुनन्-

---

१. B गुणवृद्धिप्रतिषेधार्थः.
२. B omits -तॄ-
३. B adds जलेन.
४. A omits अयं.
५. B omits root and meaning.

प्रत्ययो भवति, तत्सन्नियोगेन णेः लुक् च भवति। अर्जयतीति **अर्जुनः** भारते प्रसिद्धः ॥

---

## ॥ ३२८ ॥ [2]तृणाख्यायां चित् ॥ ३—५७ ॥

अर्जेरुनन्प्रत्ययो भवति तृणाख्यायां स चिद्भवति। तेन तृणे **अर्जुन**-शब्दोऽन्तोदात्तः ॥

---

## ॥ ३२९ ॥ अर्तेश्च ॥ ३—५८ ॥

अर्तेश्च उनन्प्रत्ययो भवति, स चित्। **अरुणः** सूर्यसारथिः ॥

---

## ॥ ३३० ॥ धारेर्णिलुक् च ॥ ३—५९ ॥

"धृङ् अवस्थाने" अस्मात् ण्यन्तात् उनन्प्रत्ययो भवति णेर्लुक् च। **धरुणः** अपां पतिः[3]। णिलुग्वचनं प्रत्ययलक्षणेन[4] वृद्धिः मा भूदिति ॥

---

## ॥ ३३१ ॥ अजियमिशीङ्भ्यश्च ॥ ३—६० ॥

"अज गतिक्षेपणयोः" "यम उपरमे" "शीङ् स्वप्ने" एभ्य[5] उनन्-प्रत्ययो भवति। अजेर्वीभावः[7]। **वयुनं** देवद्रव्यम् ॥ **यमुना** नदीविशेषः ॥ **शयुनः** अजगरः योगी वा ॥

---

## ॥ ३३२ ॥ वृतॄवदिहनिकमिकषिभ्यः सः ॥ ३—६१ ॥

"वृञ् वरणे[8]" "तॄ प्लवनतरणयोः[8]" "वदि अभिवादनस्तुत्योः[8]" "हन हिंसागत्योः" "कमु कान्तौ" "कष शिष" इति हिंसार्थः। एभ्यः

---

1. B omits तत्........भवति.
2. B omits this sūtra and the commentary.
3. B adds लोकनाम च.
4. B लक्षणवृद्धिः.
5. A and C अमियमिशीङ्.
6. A and C इत्येतेभ्यः.
7. B omits अजे........वः.
8. A and C omit meaning.

सप्रत्ययो भवति । "तितुत्र" इति इट्प्रतिषेधः । वृणोतीति **वर्षः** संवत्सर-पर्यायः । यस्तु ऋतुवाची स स्त्रीलिङ्गो नित्यं बहुवचनान्तश्च । वर्षम् इत्यच्प्रत्ययान्तोऽप्यस्ति । "अज्विधौ भयादीनामुपसंख्यानं नपुंसकभावे क्तनिवृत्त्यर्थम्[2]" इति वर्षणमित्यपि भवति । "वृषभो वर्षणात्" इति भाष्यकारवचनात् ॥ तरतीति **तर्षः** सूर्यः ॥ वदेः **वत्सः** बालः ॥ हन्तीति **हंसः** पक्षिविशेषः ॥ काम्यत इति **कंसः** असुरः ॥ **कक्षः** वनं शरीरैकदेशश्च ॥

---

## ॥ ३३३ ॥ मनेर्दीर्घश्च ॥ ३—६२ ॥

"मन ज्ञाने" अस्मात् सप्रत्ययो भवति । तत्सन्नियोगेन धातोरचो दीर्घो भवति । मन्यत इति **मांसं**[6] पिशितम् ॥

---

## ॥ ३३४ ॥ अशेर्देवने ॥ ३—६३ ॥

"अशू व्याप्तौ" अस्मात् सप्रत्ययो भवति देवने गम्यमाने[8] । अश्नुत इति **अक्षः** द्यूतशारः[9] इन्द्रियं च ॥

---

## ॥ ३३५ ॥ स्नुव्रश्चिकृत्यृषिभ्यः कित् ॥ ३—६४ ॥

"ष्णु प्रस्रवणे" "ओ व्रश्चू छेदने" "कृती छेदने" "ऋषी गतौ" एभ्यः सप्रत्ययो भवति किच्च[10] । **स्नुषा** पुत्रभार्या ॥ वृश्च्यत इति **वृक्षः** । कित्वात् संप्रसारणम्, संयोगादिलोपः, कुत्वषत्वे ॥ कृन्तत इति **कृत्स्नः** उदरः[11] ॥ **ऋक्षं** नक्षत्रम् वालुकाश्च ॥

---

१. B भूतवार्षी.
२. A -वतन्निरव्यर्थम्.
३. A and C वर्षणो भवति.
४. B omits वनं.
५. A and C मनेः सप्र-
६. B मांसः.
७. A and C omit meaning.
८. B adds दीव्यतेऽनेनेति देवनं.
९. A -शारीरः.
१०. B omits किच्च.
११. B उदरः.

॥ ३३६ ॥ ऋषेर्जातौ ॥ ३—६५ ॥

ऋषेरेव धातोः सप्रत्ययो भवति जातौ गम्यमानायाम् । **ऋक्षः** श्वापद-जातिः । पूर्वस्यैवायं प्रपञ्चः ॥

---

॥ ३३७ ॥ गृधिपत्योर्दकौ च ॥ ३—६६ ॥

"गृधु अभिकाङ्क्षायाम्" "पत ऐश्वर्ये" आभ्यां सप्रत्ययो भवति, यथासङ्ख्यं दकारककारावन्तादेशौ भवतः, किच्च । **गृत्सः** कङ्कः ॥ पत्यते[1] इति **पक्षः** कालविशेषः ॥

---

॥ ३३८ ॥ अशेस्सरन् ॥ ३—६७ ॥

अशेः सरन्प्रत्ययो भवति । अश्नुत इति **अक्षरं** वर्णम्[2] । न क्षरतीति अक्षरं इति केचित् । तथा च भाष्यम्—

"अक्षरं न क्षरं विद्यादश्नोतेर्वा सरोऽक्षरम्" इति ॥

---

॥ ३३९ ॥ वसेश्च[3] ॥ ३—६८ ॥

वसेः सरन्प्रत्ययो भवति । वसन्ति अस्मिन्निति **वत्सरः** वर्षः । सस्य "आर्धधातुके" इति सकारस्य तकारः ॥

---

॥ ३४० ॥ संपरिपूर्वाच्चित् ॥ ३—६९ ॥

सं परि इत्येवंपूर्वात् वसेः सरन्प्रत्ययो भवति चिच्च । **संवत्सरः** **परिवत्सरः** ॥

---

॥ ३४१ ॥ कृधूमदिभ्यः कित् ॥ ३—७० ॥

---

1. B पद्यते.
2. B वर्णः.
3. A omits this sūtra and the commentary.

"डु[१] कृञ् करणे" "धूञ् कम्पने" "मद तृप्तिशोधनयोः" एभ्यः सरन्प्रत्ययो भवति किच्च। तेन गुणाभावः। क्रियते इति **कृसरः** पललम्[२] ॥ **धूसरं** रूषितम् ॥ **मत्सरः** वैरी॥

---

## ॥ ३४२ ॥ पते रश्च लो वा ॥ ३—७१ ॥

"पतॢ गतौ" अस्मात् सरन्प्रत्ययो भवति। प्रत्ययरेफस्य लकारो वा[३] भवति। **पत्सरः पत्सलः**[४] प्रभासः ॥

---

## ॥ ३४३ ॥ तन्यृषिभ्यां क्सरन् ॥ ३—७२ ॥

तनोतेः ऋषतेश्च क्सरन्प्रत्ययो भवति। कित्वादनुनासिकलोपः। अनुनासिकलोपे अतो लोपो न भवति, अतो लोपे अनुनासिकलोपस्य "असिद्धवदत्राभात्" इति असिद्धत्वात्, आर्धधातुकोपदेशे यदकारान्तः तस्य लोपः इति विज्ञानाद्वा। तनोतीति **तसरः**[५] तन्तुवायः ॥ **ऋक्षरः** ऋत्विक् तोयाधारश्च ॥

---

## ॥ ३४४ ॥ [६]वीयुकणिभ्यां कालन् ह्रस्वः [७]संप्रसारणं च ॥ ३—७३ ॥

[८]वीयतिः सौत्रः। "अण रण" इति शब्दार्थदण्डके कणिः पठितः। आभ्यां कालन्प्रत्ययो भवति[९]। तत्सन्नियोगेन [१०]वीयतेरचो यथासङ्ख्यं ह्रस्वप्रसारणे भवतः। **वियालः** वृक्षविशेषः ॥ **कुणालः** पक्षी ॥

---

१. A and C करोतेः धूञः माद्यतेश्च.
२. B पललं.
३. A and C omit वा.
४. A and C change the order of these two words.
५. B omits तसरः.
६. B पीयु-
७. B संप्र-
८. B पीयति.
९. B adds ककारः कित्कार्यार्थः.
१०. B पीय-

॥ ३४५ ॥ कठिकुषिभ्यां काकुः[1] ॥ ३—७४ ॥

"कठ कृच्छ्रजीवने" "कुष निष्कर्षे" आभ्यां काकुप्रत्ययो भवति। ककारः कित्कार्यार्थः। कठतीति **कठाकुः** दरिद्रः पक्षी च ॥ **कुषाकुः** अग्निः आदित्यश्च।

---

॥ ३४६ ॥ सर्तेर्दुक् च ॥ ३—७५ ॥

सर्तेर्धातोः काकुप्रत्ययो भवति, तत्सन्नियोगेन धातोः दुगागमश्च[2]। सरतीति **सृदाकुः** वायुः तोयं[3] च ॥

---

॥ ३४७ ॥ पर्देर्नित् प्रसारणमल्लोपश्च ॥ ३—७६ ॥

"पर्द कुत्सिते शब्दे" अस्मात् काकुप्रत्ययो भवति निच्च। तत्सन्नियोगेन रेफस्य संप्रसारणम्, अकारलोपश्च। पर्दत इति **पृदाकुः**[4] वृश्चिकः व्याघ्रश्च। नित्वादाद्युदात्तः ॥

---

॥ ३४८ ॥ [5]सृयुवचिभ्योन्यजागूजक्नुचः ॥ ३—७७ ॥

सर्तेः यौतेः वचेश्च यथासङ्ख्यं अन्यच्, आगूच्, अक्नुच् इत्येते प्रत्यया भवन्ति। सरतीति **सरण्यः** मेघः चन्द्रश्च ॥ यूयते मिश्र्यत इति **यवागूः** श्राणा ॥ **वचक्नुः** ब्राह्मणः[6] ॥

---

॥ ३४९ ॥ आनकन् शीङ्भियः ॥ ३—७८ ॥

शीङो बिभेतेश्चानकन्प्रत्ययो भवति। शेते **शयानकः** अजगरः ॥ बिभेत्यस्मादिति **भयानकः** भीरुः ॥

---

1. B कटि.
2. B omits च.
3. C तोयः.
4. B पृदाकुः सर्पः वृश्चिकव्याघ्रौ च.
5. A and C सुयु-
6. A प्रमाणः.

॥ ३५० ॥ आनकच् लूशिङ्घिधाञ्भ्यः ॥ ३—७९ ॥

"लूञ् छेदने" "शिघि आघ्राणे" "डु धाञ् दानधारणयोः" एभ्यः आनकच्प्रत्ययो भवति । चकारः स्वरार्थः । लुनातीति **लवानकः** दात्रं घनं च ॥ **शिङ्घानकः** नासिकानिर्यासः ॥ **धानकः** द्रव्यपरिमाणम् ॥

---

॥ ३५१ ॥ उल्मुकदर्विहोमिनः ॥ ३—८० ॥

उल्मुकदर्विहोमिन इत्येते शब्दाः निपात्यन्ते । उचेर्लकारः मुश्चागमः । **उल्मुकम्** अलातम् ॥ दृणातेर्विः । **दर्विः** भिस्सटा ॥ जुहोतेः मुट्, इन्प्रत्ययः । **होमिः** सर्पिः, हूयत इति कृत्वा ॥

---

॥ ३५२ ॥ ह्रियः कुग्रश्च लो वा ॥ ३—८१ ॥

जिह्रतेः कुक्प्रत्ययो भवति रेफस्य लकारो वा भवति । जिहेतीति **ह्रीकुः** **ह्लीकुः** मार्जारः अप्रगल्भश्च ॥

---

॥ ३५३ ॥ हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् ॥ ३—८२ ॥

"हसे हसने" "मृङ् प्राणत्यागे" "गॄ निगरणे" "इण् गतौ" "वा गतिगन्धनयोः" "अम गत्यादिषु" "दमु ह्लादने" ["दमु उपशमे"] । लुनातिः पवतिश्च । "धुर्वी हिंसार्थः" । एभ्यः तन्प्रत्ययो भवति । "तितुत्र" इति इट्प्रतिषेधः । हसति उपादत्तेऽनेनेति **हस्तः** करः प्रमाणविशेषश्च ॥ म्रियत इति **मर्तः** मरणधर्मा मनुष्यः ॥ गिरति सर्वं ग्रसतीति **गर्तः** अवटः ॥ एतीति **एतः** प्रेषणिकः । एति नानागच्छति एतः

---

१,२. A and C omit meaning.
३. C -सकः.
४. A and C -होमिन्.
५. B omits उल्मु........नः.
C Space is left out for writing उल्मु........नः.
६. B omits शब्दाः.
७. A इणातेश्च लो वा.
८. B omits अम........हिं सार्थः.
९. B adds प्रमाविशेषः.

सारङ्गवर्णश्च[1] ॥ वातीति **वातः** वायुः । यद्यपि निष्ठायां वातः सिद्धः तथापि स्वरभेदात् पुनर्व्युत्पादनम् । एवमपि[2] "वात सुखसेवनयोः" इति चौरादिकात् वातयत्यनेनेति वातः सिद्धः, एवं तर्हि प्रपञ्चार्थं पुनर्व्युत्पादनम् ॥ अमति समाप्नोत्यनेनेति अन्तं[3] समापनम् ॥ दाम्यतीति **दन्ताः** दशनानि[4] ॥ लुनातीति **लोतः** कीटविशेषः आस्रपातः मेघश्च ॥ पवते गच्छत्यनेन समुद्रमिति **पोतः** समुद्रजलयानसाधनम् ॥ धुर्वति हिनस्तीति **धूर्तः** कुत्सिताचारः । धुर्वेस्तन्प्रत्यये राल्लोपे वोरुपधाया दीर्घे रूपम्[5] ॥

---

## ॥ ३५४ ॥ नञ्याप्नोतेरिट् च ॥ ३—८३ ॥

नञ्युपपदे आप्नोतेस्तन्प्रत्ययो भवति, प्रत्ययस्य इडागमश्च । न[6] आप्नोतीति **नापितः** वप्ता । उपपदसमासे बाहुलकान्नलोपाभावः । आप्नोतेरनुदात्तत्वादिड्विधानम् ॥

---

## ॥ ३५५ ॥ तनिमृङ्भ्यां किच्च ॥ ३—८४ ॥

तनोतेः[7] मृङश्च तन्प्रत्ययो भवति किच्च । कित्वादनुनासिकलोपो गुणाभावश्च । तनोतीति **ततं** विस्तीर्णम्[8] ॥ मृङो भूते प्रत्ययः । **मृतं** शवम् । निष्ठायां रूपे स्वरे च सिद्धे प्रपञ्चार्थं सूत्रम् । "निष्ठा च द्व्यजनात्" इत्याद्युदात्तस्य विधानात् स्वरोऽपि समानः ॥

---

## ॥ ३५६ ॥ अञ्जिघृषिभ्यः क्तः ॥ ३—८५ ॥

"अञ्जू व्यक्तिम्रक्षणगतिषु" "घृ क्षरणदीप्त्योः" "षिञ् बन्धने"

---

१. A and C सारं वर्णश्च.
२. A and B omit एवमपि........ व्युत्पादनम्.
३. B omits अन्तं समापनं but reads instead अप्रत्ययेनेति वातसिद्धिरस्ति । एवं तर्हि प्रपञ्चार्थं व्युत्पादनम्.
४. A and C दशनाः.
५. B रूपत्वं.
६. A omits न.
७. B omits तनोतेः........किच्च.
८. A and C -तीर्णः.

एभ्यः क्तप्रत्ययो भवति । ककारः कित्कार्यार्थः । अनक्तीति **अक्तं** व्याप्तम् । विपूर्वात्[1] व्यक्तः ॥ अग्निसन्निधौ क्षरतीति **घृतं** सर्पिः । घरतिः यद्यपि अविशेषेणोपदिष्टः[2] तथापि घृतादिविषय एव तस्य प्रयोगः । तथा ह्युक्तं भाष्ये "घरतिरविशेषेणोपदिष्टः घृतं घृणा घर्म इत्येतद्विषय एव" इति ॥ सिनोतीति **सितं** श्वेतवर्णः । विशुद्धवस्तुविषयत्वात्[3] संज्ञाशब्दानां क्रियाशब्दत्वाभावात् प्रत्ययान्तरविधानम् ॥

---

## ॥ ३५७ ॥ दुतनिभ्यां दीर्घश्च ॥ ३—८६ ॥

"टु दु उपतापे" "तनु विस्तारे" आभ्यां क्तप्रत्ययो भवति, तत्सन्नियोगेन तयोरचो दीर्घश्च[4] भवति । दुनोति पथोगमनेनेति **दूतः** प्रेषकः[5] ॥ तनोति निषेकादिक्रिया[6]जातमिति **तातः** पिता ॥

---

## ॥ ३५८ ॥ लोष्टपलितौ ॥ ३—८७ ॥

लोष्ट पलितौ[7] इत्येतौ निपात्येते । "लूञ् छेदने"[8] क्तप्रत्ययः, षुक् च[9] आगमः, धातोर्गुणः । लूयत इति **लोष्टं** मृत्पिण्डम् । अन्ये लोशतिं प्रकृत्यन्तरमाहुः । तस्मात् क्तप्रत्यये गुणे च [10]लोष्टमिच्छन्ति ॥ पलतेरादिपत्वम् । **पलितम्** पाण्डराः केशाः ॥

---

## ॥ ३५९ ॥ हृश्याभ्यामितन् ॥ ३—८८ ॥

हरतेः श्यायतेश्च इतन्प्रत्ययो भवति । हरतीति **हरितः** वर्णविशेषः ॥ श्यायते **श्येतः** धवलवर्णः ॥

---

१. A विवध्यक्तपटुः.
   C विव्यक्तव्य.
२. A and C उद्दिष्टः.
३. B विशिष्ट-
४. A and B omit च.
५. B प्रेषकरः.
६. A -कार्य-
७. A -पलितौ.
८. B omits root and meaning.
९. A and B omit च.
१०. A omits लोष्टमिच्छन्ति.

## ॥ ३६० ॥ रुहे रश्च लो वा ॥ ३—८९ ॥

रुहेरितन्प्रत्ययः, रेफस्य लकारो वा भवति[1]। रोहतीति **रोहितः** **लोहितः** वर्णविशेषः ॥

---

## ॥ ३६१ ॥ श्रुदक्षिस्पृहि[3]भ्य आय्यः[4] ॥ ३—९० ॥

"श्रु श्रवणे" "दक्ष गतिहिंसनयोः" "दक्ष वृद्धौ शीघ्रार्थे च" वा। "स्पृह ईप्सायाम्" एभ्य आय्यप्रत्ययो भवति। शृणोतीति **श्रवाय्यः** यज्ञः पशुश्च ॥ हिनस्तीति **दक्षाय्यः** गृध्रः ॥ स्पृहिः चुरादिरदन्तः। स्पृहयतीति **स्पृहयाय्यः** नक्षत्रमग्निश्च[5]। "अयामन्ताल्वाय्य" इत्यादिना णेरयादेशः ॥

---

## ॥ ३६२ ॥ दधिषाय्यः ॥ ३—९१ ॥

[6]दधिपूर्वात् स्यतेः आय्यप्रत्ययो भवति। दधिषाय्यः आज्यम् ॥

---

## ॥ ३६३ ॥ वृञ एण्यः[7]न् ॥ ३—९२ ॥

वृञ [8]एण्यन्प्रत्ययो भवति। व्रियत[9] इति **वरेण्यः** श्रेष्ठः प्रजापतिः अग्निः अन्नं च ॥

---

## ॥ ३६४ ॥ स्तुवः क्षेय्यश्छन्दसि ॥ ३—९३ ॥

स्तौतेः छन्दसि विषये क्षेय्यप्रत्ययो भवति। [10]स्तूयत इति **स्तौक्षेय्यः** [11]चन्द्रः पुरुषः सोमश्च ॥

---

1. B adds भवति.
2. B omits वा भवति.
3. B adds -गृहि-
4. A आयः.
5. B अनिलश्च.
6. A and C omit दधि....षाय्यः.
7. B एण्यः.
8. B एण्यप्र-
9. A and C omit व्रियत इति.
10. B omits स्तूयत इति.
11. B इन्द्रः.

॥ ३६५ ॥ राजेरन्यः ॥ ३—९४ ॥

राजेरन्यप्रत्ययो भवति । राजत इति **राजन्यः** राजा । ननु च "राजश्वशुराद्यत्" इति[1] यति कृते राजन्य इति[2] सिद्ध्यति अपत्ये। अन्यत्र न[3] सिद्ध्यतीति तदर्थं[4] प्रत्ययान्तरविधानम् । तथा च "राज्ञोऽपत्ये जातिग्रहणम्" इति वार्तिककारेणोक्तम् । अपत्यार्थस्याप्रतीतिः[5] ॥

॥ ३६६ ॥ अर्तेर्निच्च ॥ ३—९५ ॥

अर्तेरन्यप्रत्ययो भवति निच्च । तेनाद्युदात्तं पदम् । अर्यतेऽस्मादिति **अरण्यं** काननम् ॥

॥ ३६७ ॥ पर्जन्यः ॥ ३—९६ ॥

"अर्ज षर्ज आर्जने" अस्मादन्यप्रत्ययो भवति,[6] धातोः[7] पुडागमः । **पर्जन्यः** इन्द्रः[8] ॥

॥ ३६८ ॥ वदेरान्यः ॥ ३—९७ ॥

वदेरान्यप्रत्ययो भवति । शोभनं वदतीति **वदान्यः** प्रियवाक् दानशीलश्च ॥

॥ ३६९ ॥ अमिनक्षियजिबन्धिपतिभ्योऽत्रन् ॥ ३—९८ ॥

"अम रोगे" "अम गत्यादिषु" वा । "णक्ष गतौ" "यज देवपूजादौ[9]" "बन्ध बन्धने[9]" "पत्लृ गतौ[9]" एभ्यः अत्रन्प्रत्ययो भवति ।

१. B omits इति यति.
२. A omits इति सिद्ध्यति.
३. A omits न.
४. B adds न.
५. A and C अप्रत्यक्षस्य.
६. A and C निपात्यते.
७. A and C omit धातोः.
८. B adds शूरम्योश्च, very probably as a sūtra but the commentary is wanting.
९. A and C omit meanings.

[1]अमति भक्षयत्यस्मिन्निति अमत्रं भाजनम् ॥ [2]नक्षतीति नक्षत्रम् । न क्षरति न क्षीयत इति वा नक्षत्रमिति "न भ्राट्" इत्यादिना प्रकृतिभावेन नक्षत्रसिद्धिमाहुः केचन ॥ यजन्त्यस्मिन्निति यजत्रम् अग्निहोत्रम् ॥ बध्नातीति बधत्रः शूरः । बाहुलकान्नलोपश्च ॥ पतन्त्यनेनेति पतत्रं [3]छदनम् । पतन्त्यस्मिन्निति वा पतत्रम् अन्तरिक्षम् ॥

---

॥ ३७० ॥ [4]गलेरादेश्च कः ॥ ३—९९ ॥

"गल अदने" अस्मादत्रन्प्रत्ययो भवति । धातोरादेश्च ककारः । गलति भक्षयतीति [5]कलत्रं [6]भार्या ॥

---

॥ ३७१ ॥ वृञश्चित् ॥ ३—१०० ॥

वृञः अत्रन्प्रत्ययो भवति, [7]चिच्च । चित्वादन्तोदात्तः । व्रियते वेष्टयतेऽनयेति वरत्रा रज्जुः ॥

---

॥ ३७२ ॥ सुनि विदेः कत्रन् ॥ ३—१०१ ॥

सुन्युपपदे विदेः कत्रन्प्रत्ययो भवति । सुन्निपात अवधारणार्थः । सुविदत्रं कुटुम्बं धनं च ॥

---

॥ ३७३ ॥ कृतेर्नुम् च ॥ ३—१०२ ॥

"कृती छेदने" अस्मात् कत्रन्प्रत्ययो भवति, धातोर्नुमागमश्च । कृन्ततीति कृन्तत्रं लाङ्गलम् कर्मलाभश्च ॥

---

१,२. A and C omit the word.
३. B omits छदनं........पतत्रम्.
४. B गडे-
५. B गलत्रं.
६. B omits भार्या.
७. B omits चिच्च............सुन्नि- in the commentary on the next sūtra.

## ॥ ३७४ ॥ भृञ्दृशियजिपर्विपच्यमिनमि-[1] हर्योऽतच्[2] ॥ ३—१०३ ॥

"भृञ् भरणे[3]" "दृशिर् प्रेक्षणे[3]" "यज देवपूजादौ[3]" "पर्व मर्व पूरणे" "डु पचष् पाके[3]" "अम रोगे[3]" "णमु प्रह्वत्वे[3]" "हर्य गतौ" एभ्योऽतच्प्रत्ययो भवति। बिभर्तीति **भरतः**। येषामाद्यः[4] संज्ञाकारी [?] ते भरताः ॥ दृश्यत इति **दर्शतः** सोमः ॥ यज्यतेऽस्मिन्निति **यजतः** अग्निः ॥ पर्वतीति **पर्वतः** गिरिः ॥ पचति भूतानीति **पचतः** कालः मृत्युश्च[5] ॥ [6]नमतीति **नमतः** ऊर्णामयः कुथविशेषः धूमश्च ॥ हर्यतीति **हर्यतः** यज्ञः ॥

---

## ॥ ३७५ ॥ पृषिरञ्जिभ्यां कित् ॥ ३—१०४ ॥

"पृष सेचने" "रञ्ज रागे" आभ्यामतच्प्रत्ययो भवति, किच्च। पर्षति सिञ्चति[7] रेतस्सेकं करोतीति[8] **पृषतः** मृगः ॥ रञ्जतीति **रजतं** कलधौतम् ॥

---

## ॥ ३७६ ॥ [9]खलतः ॥ ३—१०५ ॥

"खल संचलने" अस्मादतच्प्रत्ययो[10] निपात्यते। खलति[11] दौर्जन्यं संचिनोतीति **खलतः** दुर्जनः शिलामध्यं च ॥

---

## ॥ ३७७ ॥ शीङ्शपिरुगमिवञ्चिजीविप्राणि-भ्योऽथः ॥ ३—१०६ ॥

---

१. B -तमिनमि-
२. B ङतच्.
३. A and C omit meanings.
४. B -आदिः.
५. B पचतः अततः कामः भृत्यश्च.
६. B omits नमतीति........सेचने in the commentary on the next sūtra.
७. A adds इति.
८. A omits इति.
९. B This sūtra and its commentary come after the next sūtra.
१०. B adds भवति.
११. B adds इति.

"शीङ् स्वप्ने" "शप आक्रोशे" "रु शब्दे" "गम्लृ गतौ[१]" "वञ्चु प्रलम्भने" "जीव प्राणधारणे" "अन" प्रपूर्वः। एभ्योऽथप्रत्ययो भवति। शेत इति **शयथः** अजगरः॥ शापयत्यनेनेति **शपथः** सत्यविशेषः॥ रौतीति **रवथः** भीरुः॥ गच्छतीति **गमथः** आपः॥ वञ्चयतीति **वञ्चथः** कालः कोकिलश्च॥ जीवतीति **जीवथः** कूर्मः मयूरश्च॥ **प्राणथः** प्रजापतिः॥

---

## ॥ ३७८ ॥ दृशिशमिदमिभ्यश्च ॥ ३—१०७ ॥

"दृशिर् प्रेक्षणे" "शमु उपशमने" "दमु उपरमे" एतेभ्योऽथ-प्रत्ययो भवति। दर्शयतीति **दर्शथः** गर्तः प्रसारणं च॥ शाम्यत्यनेनेति **शमथः** शान्तिः॥ दाम्यत्यनेनेति **दमथः** दण्डः॥

---

## ॥ ३७९ ॥ उपसर्गे वसेः ॥ ३—१०८ ॥

उपसर्गे उपपदे वसेर्धातोरथप्रत्ययो भवति। आभिमुख्येन वसत्यस्मिन्निति **आवसथः** गृहम्। "थाथञ्" इति[२] आवसथोऽन्तोदात्तः॥

---

## ॥ ३८० ॥ भृञश्चित् ॥ ३—१०९ ॥

भृञः अथप्रत्ययो भवति चिच्च। चित्वादन्तोदात्तः। भरतीति **भरथः** अग्निः॥

---

## ॥ ३८१ ॥ रुविदिभ्यां कित् ॥ ३—११० ॥

"रु[३] शब्दे" "विद ज्ञाने" आभ्यामथप्रत्ययो भवति किच्च। रौतीति **रुवथः**[४] कुक्कुटः[५]॥ वेत्तीति **विदथः** योगी॥

---

१. A and C omit meanings.

२. A इत्यादिना.

३. A and C रौतेः विदेश्च.

४. B adds श्वा.

५. B adds च.

## ॥ ३८२ ॥ अत्यमिचमितमि[1]रभिनभि[2]तपि-पनिभ्यो[3]ऽसच् ॥ ३—१११ ॥

"अत सातत्यगमने" "अम गत्यादिषु च" "चमु अदने" "तमु ग्लाने" "रभ राभस्ये" "णभ तुभ हिंसायाम्" "तप सन्तापे" "पन च"। [4]एभ्योऽसच्प्रत्ययो भवति । अततीति अतसः वायुः[5] ॥ अमतीति अमसः उदकम् ॥ [6]चमत्यनेनेति चमसः यज्ञपात्रम् ॥ तमसा नदी । त[7]था च भर्तृकाव्ये प्रयोगः—

"संप्राप्य तीरं तमसापगायाः गङ्गाम्बुसंपर्कविशुद्धिभाजः" इति[8] ।

कूपश्च ॥ रम्यतेऽनेनेति रभसः वेगः परिपोषश्च ॥ नभ्यतीति नभसः [9]समुद्रः ॥ तपतीति तपसः आदित्यः ॥ पन्यते स्तूयत इति पनसः कण्टकिफलम् ॥

---

## ॥ ३८३ ॥ वेञस्तुट् च ॥ ३—११२ ॥

"वेञ् तन्तुसन्ताने" अस्मादसच्प्रत्ययो भवति, प्रत्ययस्य तुडागमश्च । वेतसः विदुलः ॥

---

## ॥ ३८४ ॥ वयो णित् ॥ ३—११३ ॥

"[10]अय वय गतौ" अस्मादसच्प्रत्ययो [11]भवति णिच्च । णित्वादुपधाया वृद्धिः । [12]वयते गच्छतीति वायसः काकः ॥

---

## ॥ ३८५ ॥ वहियुभ्यां च ॥ ३—११४ ॥

---

१. B omits तमि.
२. B -लभिनभि-
३. B -पनिभृहि-
४. B omits एभ्यः........भवति.
५. B उमाङ्गवायुश्च.
६. B चम्यतेऽनेनेति.
७. B omits तथा च.
८. B omits इति.
९. A and C omit समु....तपसः.
१०. B omits अय.
११. B omits भवति.
१२. B omits वयते......णित्वाद्वृद्धिः in the commentary on the next sūtra.

वहियुभ्यामसच्प्रत्ययो भवति, चकारात् णिच्च । णित्वाद्वृद्धिः । वहति गच्छति **वाहसः** सर्पविशेषः जरद्रवः अग्निश्च ॥ **यावसं** [1]गोभुक्तम् । "घासस्तु यावसः[2] प्रोक्तः" इति हलायुधः[3] ॥

---

## ॥ ३८६ ॥ दिविसिविभ्यां किच्च ॥ ३—११५ ॥

"[4]दिवु क्रीडायाम्" "षिवु तन्तुसंताने" आभ्यामसच्प्रत्ययो भवति किच्च । दीव्यत्यस्मिन्निति **दिवसः** ॥ **सिवसं** तदेव ॥

---

## ॥ ३८७ ॥ कृगृशृशलगर्दिभ्योऽभच् ॥ ३—११६ ॥

"कॄ विक्षेपे[5]" "गॄ निगरणे[5]" "शॄ हिंसायाम्" "शल गतौ" "गर्द शब्दे" एभ्योऽभच्प्रत्ययो भवति । किरतीति **करभः** उष्ट्राणां बालकः ॥ गरतीति **गरभः** हिंस्रः ॥ शृणातीति **शरभः** मृगविशेषः श्वापदः[6] ॥ शलतीति **शलभः** पतङ्गः ॥ गर्दतीति **गर्दभः** खरः ॥

---

## ॥ ३८८ ॥ ऋषिवृषिभ्यां कित् ॥ ३—११७ ॥

"ऋषी गतौ" "वृषु सेचने" आभ्यामभच्प्रत्ययो भवति किच्च । ऋषति गच्छतीति **ऋषभः** ककुद्मान् ॥ वर्षति सिञ्चति सर्वदा रेतस्सेकं करोतीति **वृषभः** स एव । वर्षयति अभिलषितं फलं प्रयच्छतीति वा वृषभः । तथा च वैदिकः प्रयोगः[7] "वृषभो रोरवीति" इति[8] ॥

---

## ॥ ३८९ ॥ रुशेर्निलुशं[9] च ॥ ३—११८ ॥

---

1. C गोभक्तं.
2. B वायसः.
3. B omits हलायुधः.
4. A and C दीव्यतेः सीव्यतेश्च.
5. A and C omit meanings.
6. B omits श्वापदः.
7. A and C omit प्रयोगः.
8. B omits इति.
9. B लुश्.

"रुश हिंसायाम्" अस्मादभच्प्रत्ययो भवति नित्त्व कित्त्व। लुश इत्यय-मादेशः[1]। रोशतीति **लुशभः** गन्धहस्ती। अन्ये लुशिं प्रकृत्यन्तरमाहुः। तथा च धातुपारायणे "अवृत्तकृतत्वात् भूवादयोऽपरिसमाप्ता एव। तेनान्ये लुशरुषाद-योऽप्यत्रैव द्रष्टव्याः। "टु ओ श्वि गतिवृद्ध्योः वृत्" इति वृत्करणं यजादिपरि-समाप्त्यर्थम्, न[2] भ्वादिपरिसमाप्त्यर्थम्" इति। एवं चादेशमनर्थकम्॥

## ॥ ३९० ॥ रासिवल्लिभ्यां च ॥ ३—११९ ॥

"रासृ शब्दे" "वल्लिः" सौत्रो धातुः[3]। केचित् भूवादौ प्रक्षिपन्ति। आभ्यामभच्प्रत्ययो भवति॥ रासते शब्दयतीति **रासभः** खरः॥ **वल्लभः** भर्ता॥

## ॥ ३९१ ॥ गडेः कल च ॥ ३—१२० ॥

"गड सेचने" अस्मादभच्प्रत्ययो भवति, तत्सन्नियोगेन धातोः कलादेशः। गडति सिञ्चतीति **कलभः** करिपोतः॥

## ॥ ३९२ ॥ जॄविशिभ्यां झच् ॥ ३—१२१ ॥

"जॄ वयोहानौ" "विश प्रवेशने" आभ्यां झच्प्रत्ययो भवति। प्रत्ययोपदेशकाल एव झोऽन्तादेशः; एवं झित्करणमर्थवद्भवति। [4]जीर्यतीति **जरन्तः** महिषः॥ वेशतीति **वेशन्तः** कामुकः पल्वलोदकं च॥

## ॥ ३९३ ॥ रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥ ३—१२२ ॥

"रुह बीजजन्मनि" "टु नदि समृद्धौ" "जीव प्राणधारणे" "प्राण" एभ्यो झच्प्रत्ययो भवति षिच्च। तेन "षिद्गौरादिभ्यश्च" इति स्त्रियां ङीष् आशिषि गम्यमानायाम्। रोहत इति **रोहन्तो** वृक्षः;

---

१. C -यंचादेशः.
२. A omits न........मिति.
३. A and C omit धातुः.
४. B omits जीर्यति........कामुकः
५. B जीलादेकं.
६. A षित्वात्.

रोहन्ती लता ॥ नन्दतात्[1] इत्येवं प्रार्थितः **नन्दन्तः** प्राणी औषधं[2] च ॥ जीवतात् **जीवन्ती** ओषधिविशेषः ॥ प्राणि तु **प्राणन्तः** वायुः ॥

---

## ॥ ३९४ ॥ तॄभूवसिवहिभासि[3]साधिगडिमण्डिजिनन्दिभ्यश्च ॥ ३—१२३ ॥

झच्प्रत्ययोऽनुवर्तते । "तॄ प्लवनतरणयोः[4]" "भू सत्तायाम्[5]" "वस निवासे[6]" "वह प्रापणे[6]" "भासृ दीप्तौ" "राध साध संसिद्धौ" "गड सेचने" "मडि भूषायाम्" "जि जये" "टु नदि समृद्धौ"। अत्र साधिगडिमण्डीति णिजन्तानां निर्देशः । एभ्यो झच्प्रत्ययो भवति षिच्च । तरति[7] प्लवतेऽस्मिन्निति **तरन्तः** समुद्रः ॥ भवतीति **भवन्तः** जीवः सुखम् ॥ वसन्त्यस्मिन्निति **वसन्तः** ऋतुविशेषः[8] । निवसतीति निपूर्वादपि निवसन्तः, यस्यायं प्रयोगः "ग्रामे निवसन्तः" इति ॥ वहतीति **वहन्तः** रथः । वहन्ती नदी ॥ भासत इति **भासन्तः** सूर्यः नक्षत्रं च ॥ साधयतीति **साधयन्तः** भिक्षुः ॥ गडयति सेचयतीति **गडयन्तः** । घटादित्वात् मित्वम् । गडयन्तः जलम् ॥ मण्डयतीति **मण्डयन्तः** नटः[9] । मण्डिश्चुरादिः ॥ जयतीति **जयन्तः** इन्द्रपुत्रः ॥ नन्दयतीति **नन्दयन्तः** राजा हिरण्यं च । पूर्वसूत्रे नन्दिग्रहणं ण्यन्तार्थम्, आशिरार्थं च ॥

---

## ॥ ३९५ ॥ हन्तेर्मुट् हि[10] च ॥ ३—१२४ ॥

"हन[11] हिंसागत्योः" अस्मात् झच्प्रत्ययो भवति । प्रत्ययोपदेशकाले

---

१. A and C add **नन्दतात् इत्येवं नन्दन्तः**.
२. B **औषध-**
३. A and C omit **भासि**.
४. A and C omit meanings.
५. B adds "**जि जये**"
६. A and C omit meanings.
७. A and C omit **तरति**.
८. B omits **ऋतुविशेषः**.
९. A and C **नभः**.
१०. B omits **हि**.
११. A and C **हन्तेः झच्**.

अन्तादेशे कृते पश्चात्तस्य मुडागमः, धातोर्हिंशब्द आदेशः। हन्ति प्राणिनः तुषारादिना इति हेमन्तः ऋतुविशेषः ॥

---

## ॥ ३९६ ॥ भन्देर्नलोपश्च ॥ ३—१२५ ॥

"भदि कल्याणे सौख्ये च" अस्मात् झच्प्रत्ययो भवति, तत्सन्नियोगेन धातोः नलोपश्च । भैन्दत इति भदन्तः । भदन्तो नाम कश्चित् ॥

"हन्तेर्मुट् [3]हि च" इत्यस्यानन्तरं केचित् "सिनोतेरी च" इति सूत्रमधीयते । तस्यायमर्थः । "षिञ् बन्धने" अस्मात् झच्प्रत्ययो भवति धातोरन्त्यस्य ईकारादेशः । चकारात् प्रत्ययस्य मुडागमः । सीमन्त इत्युदाहरणम् । एतदन्ये[5] न मृष्यन्ति, सीम्नोऽन्त इति समासे[7] "सीमन्तः केशेषु" इति पररूपे च सीमन्तसिद्धेः ॥

---

## ॥ ३९७ ॥ ऋच्छेररः ॥ ३—१२६ ॥

"ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु" इति तौदादिकः । तस्मादरप्रत्ययो भवति । ऋच्छतीति ऋच्छरा वेश्या ॥

---

## ॥ ३९८ ॥ अर्तिकमिचमिभ्रमिदिविवासिवाशिभ्यश्चित् ॥ ३—१२७ ॥

"ऋ गतौ" "कमु कान्तौ" "चमु अदने" "भ्रमु अनवस्थाने" "भ्रमु चलने" वा । "दिवु क्रीडादौ" "वसिः" ण्यन्तः । "वाशृ शब्दे" एभ्योऽरप्रत्ययो भवति चिच्च । चित्वादन्तोदात्तः । अर्यत इति अररः सोमः

---

1. A omits इति.
2. A omits भन्दत इति भदन्तः.
3. B omits हि.
4. A and C omit -प्रत्ययो भवति.
5. B अपरे.
6. B omits इति.
7. A and B omit समासे.
8. B अस्मात्.
9. B -भ्रमिचमि-
10. B omits -वाशि-

कवाटश्च[1]। "कवाटमररं तुल्ये" इत्यमरः[2]॥ [3]कामयते **कमरः** कामुकः॥ चमति भक्षयतीति **चमरः** मृगविशेषः॥ भ्रमतीति **भ्रमरः** भृङ्गः॥ दीव्यतीति **देवरः** पत्युः कनीयान् भ्राता॥ वासयतीति **वासरः** दिवसः॥ **वाशरः** अग्निः॥

## ॥ ३९९ ॥ कुवः कुरन् ॥ ३—१२८ ॥

कवतेः कुरन्प्रत्ययो भवति। कौतीति **कुररः** पक्षिविशेषः। ककारः कित्कार्यार्थः। नकारः स्वरार्थः॥

## ॥ ४०० ॥ अङ्गिमदिमन्दिभ्य आरन् ॥ ३—१२९ ॥

"अगि" गत्यर्थः। "मदी हर्षे" "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" एभ्य आरन्प्रत्ययो भवति। अङ्गतीति **अङ्गारः** दग्धकाष्ठम्॥ मदयतीति **मदारः**॥ मन्दयतीति **मन्दारः** वृक्षविशेषः॥

## ॥ ४०१ ॥ गडेः कट च ॥ ३—१३० ॥

"गड सेचने" अस्मादारन्प्रत्ययो भवति, तत्सन्नियोगेन कट[6] आदेशः। **कटारः** जलपात्रं उत्पलमूलं च; देशविशेषो वा॥ "कटे वर्षावरणयोः" [7]इत्यतः आदेशविधानमन्तरेणापि सिद्धे आदेशवचनमनर्थकम्[8]॥ केचित् "गडेः कड च" इति सूत्रं पठन्ति; गडेरारन्प्रत्ययः कडादेशश्च; कडारः वर्णविशेषः इति वर्णयन्ति। उभयमपि ग्राह्यम्॥

## ॥ ४०२ ॥ शृङ्गारभृङ्गारौ ॥ ३—१३१ ॥

"शॄ हिंसायाम्" अस्मादारन्प्रत्ययो निपात्यते, धातोः ह्रस्वत्वं

---

१. A and C -टश्च.
२. B इति निघण्टुः.
३. A omits काम.........कमरः.
४,५. A कूरन्.
B करन्.
६. B कटशब्दः.
७. B इत्यस्मात्.
८. A adds इति.

नुमागमः। अपरे "श्रिगि गत्यर्थे" इत्यस्मात् आरन्प्रत्ययः संप्रसारणं च निपातयन्ति। **भृङ्गारः** रसविशेषः॥ भृञः आरन्प्रत्ययः। धातोर्नुमागमः, प्रत्ययस्य गुडागमश्च[1]। भ्रियत इति **भृङ्गारः** कनकालुका॥

---

## ॥ ४०३ ॥ कजिमृजिभ्यां चित्॥ ३—१३२॥

"कजि खजि [3]गतिवैकल्ये" "मृजू शुद्धौ" आभ्यामारन्प्रत्ययो भवति चिच्च। **कञ्जारः** आपः गृहं च॥ मृजेः वृद्धिः। **मार्जारः** बिडालः॥

---

## ॥ ४०४ ॥ कमेरुच्चोपधायाः[4]॥ ३—१३३॥

कमेर्धातोः आरन्प्रत्ययो भवति चिच्च। [5]उपधाया उकारादेशः। काम्यत इति **कुमारः** बालः॥ "कुमार क्रीडायाम्" इति[6] चौरादिकः। अतः पचाद्यचि कुमारः। तथा च "पचाद्यचि[7] कुमारशब्दोऽन्तोदात्तः" इति वृत्तावुक्तम्। सर्वथान्तोदात्तत्वात् आरन्प्रत्ययपक्षेऽपि चिद्ग्रहणमनुवर्त्यम्[8]॥

---

## ॥ ४०५ ॥ तुषारादयश्च[9]॥ ३—१३४॥

तुषारादयः शब्दाः आरन्प्रत्ययान्ता निपात्यन्ते। तुषेरारन्प्रत्ययः गुणाभावश्च। **तुषारः** हिमम्॥

---

## ॥ ४०६ ॥ सर्तेरपः[10] षुक् च॥ ३—१३५॥

"सृ गतौ" अस्माद्धातोरारन्प्रत्ययो भवति। धातोः षुगागमः। सरतीति **सर्षपः** सिद्धार्थः धान्यविशेषः॥

---

१. B "शॄ हिंसाग-"
२. A and C omit च.
३. A and C omit गति-
४. B adds कित्.
५. B adds धातोः.
६. B omits इति.
७. B omits पचाद्यचि.
८. B omits -प्रत्यय-
९. A and C omit this sūtra and its commentary.
१०. A and C omit this sūtra and its commentary.

॥ ४०७ ॥ उषिकुटिदलिकचिखजिभ्यः कपन् ॥ ३—१३६ ॥

"उष दाहे" "कुट कौटिल्ये" "दल विदारणे" "कच बन्धने"[1] "खज वैकल्ये" एभ्यः कपन्प्रत्ययो भवति । ओषतीति **उषपः** सूर्यः तमश्च ॥ **कुटपः** प्रस्थचतुर्भागः ॥ दलत्यनेनेति **दलपः** [2]प्रहरणविशेषः पक्षी च ॥ **कचपः** शाकः तृणं च ॥ **खजपः** घृतं पन्थाश्च ॥

---

॥ ४०८ ॥ क्वणेः संप्रसारणं च ॥ ३—१३७ ॥

क्वणिः शब्दार्थः । अस्मात् कपन्प्रत्ययो भवति, धातोः संप्रसारणं च । वकारस्य स्थाने उकारः । पूर्वं क्वणितमिति **कुणपः** शवम् ॥

---

॥ ४०९ ॥ कपंश्चाक्रवर्मणस्य ॥ ३—१३८ ॥

क्वणेरेव धातोः कपन्प्रत्ययो भवति चाक्रवर्मणस्याचार्यस्य मतेन । [3]संप्रसारणं च । [4]**कुणपः** स एव ॥

---

॥ ४१० ॥ विटपविष्टपविशिपोलपाः ॥ ३—१३९ ॥

"विट शब्दे" "विष्ऌ व्याप्तौ" "विश प्रवेशने" "उच समवाये" एभ्यः कपन्प्रत्यये[5] एतानि रूपाणि निपात्यन्ते । विटतीति **विटपः** वृक्षावयव-विशेषः ॥ [6]कपन्निपातनात् [7]टुगागमः । **विष्टपं** भुवनम् ॥ विशन्त्यस्मिन्निति **विशिपं** गृहम् ॥ उचेर्लकारः । **उलपं** तृणम् ॥

---

॥ ४११ ॥ वृतेस्तिकन् ॥ ३—१४० ॥

"वृतु वर्तने" अस्मात्तिकन्प्रत्ययो भवति । वर्तत इति **वर्तिका** [8]व्याख्या-

---

1. B बन्धने.
2. B omits प्रह........पक्षी च.
3. B omits संप्रसारणं च.
4. A and C कणपः
5. A adds भवति तस्मिन्.
   B adds भवति.
6. B adds विषेः.
7. B टकारागमः.
8. A काव्य.
   C space is left out for the word व्याख्या.

अन्धविशेषः शकुनिविशेषश्च । वृनेः ण्वुलि गुणे "वर्तका शकुनौ प्राचाम्" इति "प्रत्ययस्थात्" इत्यादिना प्राप्तस्येत्वस्य प्रतिषेधो[वि] यद्यपि सिद्ध्यति तथापि[1] प्राचाममपि वर्त्तिकासिद्ध्ये तिकन्प्रत्ययो विधीयते। बहुभिः वर्त्तिका इति इकारस्य श्रवणार्थं तिकन्प्रत्ययो विधीयते ॥

---

## ॥ ४१२ ॥ कृतिभिदिलतिभ्यः कित् ॥ ३—१४१ ॥

[3]"कृती च्छेदने[4]" "भिदिर् विदारणे[5]" "लत" इति सौत्रः । एभ्यः तिकन्प्रत्ययो भवति किच्च। कृन्ततीति कृत्तिका नक्षत्रविशेषः ॥ भिनत्तीति भित्तिका[6] रोहती च ॥ लत्तिका गोधा ॥

---

## ॥ ४१३ ॥ इष्यशिभ्यां तकन् ॥ ३—१४२ ॥

"इषु इच्छायाम्" "अशू व्याप्तौ" "अश भोजने" वा । आभ्यां तकन्प्रत्ययो भवति । इष्यत इति इष्टका ॥ अश्नुत इति अष्टका । अष्ट परिमाणमस्येति "सङ्ख्याया अतिशदन्तायाः कन्" [इति कनि] "अष्टका पितृदेवत्ये" इति इत्वस्य निषेधेन रूपे सिद्धे ततोऽन्यत्रापि यथा स्यात इत्यशेरुपादानम्[11] ॥

---

## ॥ ४१४ ॥ इणस्तशंस्तशसुनौ ॥ ३—१४३ ॥

"इण् गतौ" अस्मात्तशन्, तशसुन् इत्येतौ प्रत्ययौ भवतः । एति ीति एतशः इन्द्रः अध्वर्युश्च ॥ एतशसुः ब्राह्मणः होता अग्निश्च ॥

---

B तथा च.

१. B बहुभिः............विधीयते is omitted here but written before "कृती छेदने" in the commentary on the next sūtra.

३. B adds कृतिलतिभिदादिभिः.

४. A and C omit meanings.

५. B किद्भवति.

६. B शरावती च.

७. B omits meaning.

८. A and C अश्यते.

९. The words within brackets are omitted in all mss.

१०. A omits this quotation.

११. A उपपादनम्.

॥ ४१५ ॥ वीपतिभ्यां तनन् ॥ ३—१४४ ॥

"वी गतिप्रजनकान्त्यसनखादनेषु" "पत्लृ गतौ" आभ्यां तनन्प्रत्ययो भवति। वीयते इति वेतनम् भृतिः॥ पत्यते सर्वैरुपभोगार्थं गम्यत इति पत्तनम्।

"अनेकजातिसंबाधं परद्रव्योपशोभितम्।
सागरोपान्तसंश्रावं समयैः षड्भिरन्वितम्॥"

---

॥ ४१६ ॥ दृदलिभ्यां भः ॥ ३—१४५ ॥

"दृ विदारणे" "दल भेदने" आभ्यां भप्रत्ययो भवति। दारयतीति दर्भः कुशः॥ दलभः वल्कलम्॥

---

॥ ४१७ ॥ अर्तिगृभ्यां भन् ॥ ३—१४६ ॥

अर्तेः गिरतेश्च भन्प्रत्ययो भवति। नकारः स्वरार्थः। अर्यत इति अर्भः बालः॥ गिरतीति गर्भः अन्तर्गतवस्तुविशेषः॥

---

॥ ४१८ ॥ इणः कित् ॥ ३—१४७ ॥

इणो भन्प्रत्ययो भवति किच्च। एति गच्छतीति इभः हस्ती॥

---

॥ ४१९ ॥ असिसञ्जिभ्यां क्थिन् ॥ ३—१४८ ॥

"असु क्षेपणे" "षञ्ज संगे" आभ्यां क्थिन्प्रत्ययो भवति। अस्यतीति अस्थि कीकसम्॥ सज्जतीति सक्थि ऊरुप्रदेशः॥

---

॥ ४२० ॥ प्लुषिशुषिकुषिभ्यः क्सः ॥ ३—१४९ ॥

---

1. B adds अनेन.
2. A and C space is left out for writing संश्रा.....यैः.
3. B omits बालः.
4. B omits किच्च.

" प्लुष दाहे " " शुष शोषणे " " कुष निष्कर्षणे " एभ्यः क्सि-प्रत्ययो भवति । प्लुष्यतीति **प्लुक्षिः** उदकम् ॥ शोषयतीति **शुक्षिः** वायुः ॥ कुष्णाति सर्वं निष्कर्षतीति **कुक्षिः** उदरम् ॥

---

## ॥ ४२१ ॥ अशेर्नित्[1] ॥ ३—१५० ॥

" अशू व्याप्तौ " अस्मात् क्सिप्रत्ययो भवति नित्च । तेनाद्युदात्तोऽक्षि-शब्दः । अश्यतेऽनेनेति **अक्षि** चक्षुः ॥

---

## ॥ ४२२ ॥ इष्यशूभ्यां क्सुः ॥ ३—१५१ ॥

" इषु इच्छायाम्[2] " " अशू व्याप्तौ " आभ्यां क्सुप्रत्ययो भवति । इष्यते भक्षणायेति **इक्षुः** ओषधिविशेषः ॥ [3]अश्नुत इति **अक्षुः** आदित्यः । " तितुत्र " इतीट्प्रतिषेधः ॥

---

## ॥ ४२३ ॥ अवितॄस्तृतन्त्रिभ्य ईः[4][5] ॥ ३—१५२ ॥

" अव " रक्षणादिषु । " तॄ प्लवनतरणयोः " " स्तॄञ् आच्छादने " " तन्त्रि कुटुम्बधारणे " । चौरादिकः । एभ्य ईप्रत्ययो भवति । अवतीति **अवीः**[6] प्रकाशः[7] । अवति रक्षत्यात्मानं परपुरुषादिभ्य इति अवीः रजस्वला च ॥ तीर्यतेऽनयेति **तरीः**[8] नौः वैश्वानरश्च[9]॥ स्तृणातीति **स्तरीः**[10] धूमः ॥ **तन्त्रीः**[11] वीणारज्जुः वाद्यविशेषश्च ॥

---

१. B omits this sūtra and its commentary.
२. A and C omit meanings.
३. B **अश्यते**.
४. B space is left out for writing this sūtra.
५. C **ई**.
६. B and C **अवी**.
७. A and C omit **प्रकाशः**.
८. C **तरी**.
९. A and C omit **च**.
१०. C **स्तरी**.
११. C **तन्त्री**.

॥ ४२४ ॥ यापोः कित् द्वे च ॥ ३—१५३ ॥

यातेः पातेः पिबतेर्वा ईप्रत्ययः[1] किद्भवति, यापोः द्विर्वचनं च । कित्वादातो लोपः । यातीति ययीः[2] दीर्घयष्टिः ॥ पपीः[3] दन्ती सूर्यश्च ॥

---

॥ ४२५ ॥ लक्षेर्मुट् च ॥ ३—१५४ ॥

"लक्ष दर्शनाङ्कनयोः" अस्मादी[4]प्रत्ययो भवति, प्रत्ययस्य मुडागमश्च । लक्षयतीति लक्ष्मीः श्रीः ॥

---

॥ ४२६ ॥ युष्यसिभ्यां मदिक् ॥ ३—१५५ ॥

"युषिः" सौत्रः । "असु क्षेपणे" आभ्यां मदिक्प्रत्ययो भवति । युष्मत् ॥ अस्मत् ॥ त्यदादिषु व्युत्पत्तिः केवलं स्वरस्य वर्णानुपूर्वीपरिज्ञानमात्रफला, स[5]र्वथार्थानुगमाभावात्, तै[6]लपायिकावत् ॥

इतीन्दुग्रामसमीपवर्त्यग्रहारवास्तव्येन उत्तरमेर्वभिजनेन धर्मशास्त्रपारगार्यभट्टसूनुना गार्ग्येण श्वेतवनवासिनाम्ना विरचितायामुणादिवृत्तौ तृतीयः पादः



---

१. A adds भवति.
२. C ययी.
३. C पपी.
४. B तस्मात्.
५. A सर्वार्था-
　B सर्वानुग-
६. B omits तैल........वत्.

## ॥ अथ चतुर्थः पादः ॥

ईप्रत्ययाधिकरस्यापरिसमाप्तत्वात् तमेवाधिकारमाश्रित्य निपातनमाह—

### ॥ ४२७ ॥ वातप्रमीः ॥ ४—१ ॥

वातशब्दे तृतीयान्ते उपपदे[1] प्रपूर्वान्मीङः ईप्रत्ययो निपात्यते । वातेन प्रमीयते[2] पीड्यते इति **वातप्रमीः** अश्वमृगः शमीवृक्षश्च ॥

### ॥ ४२८ ॥ ऋतन्यञ्जिवन्यज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः अत्नियतुजलिजिष्टुजिष्णुजिशन्स्यन्निथिन्नुल्यशासानुकः ॥ ४—२ ॥

"ऋ गतौ" "ऋ गतिप्रापणयोः" वा । "ॠ सृ गतौ" वा । "तनु विस्तारे" "अञ्जू व्यक्तिमर्षणगतिषु" "वन षण संभक्तौ" "वनु याचने" वा । "अज गतिक्षेपणयोः" । अर्तेः णिचि "अर्तिह्री" इत्यादिना पुकि अर्पिः । "मदी हर्षे" "अत सातत्यगमने" । अगिः गत्यर्थः । "कु शब्दे" "यु मिश्रणे" "कृश तनूकरणे" एभ्यो यथासङ्ख्यं अत्नि यतुच् अलिच् इष्टुच् इष्णुच् इशन् स्यन् इथिन् उलि अश अस आनुक् इत्येते प्रत्यया भवन्ति । अर्तेः अत्निः । अर्यते मीयतेऽनेनेति **अरत्निः** हस्तः ॥ तनोतेः यतुच् । तनोतीति **तन्यतुः** आदित्यः ॥ अञ्जेः अलिच् । अनक्तीति **अञ्जलिः** सन्निवेशविशिष्टः करः ॥ वनेरिष्टुच् । **वनिष्टुः** अपानं कृपाणश्च ॥ अजेरिष्णुच् । अजतीति[4] **अजिष्णुः** अग्निः उदकं च ॥ अर्पेरिशनि णिलोपः । अर्पयतीति **अर्पिशः** हस्ती[5] अग्रमांसं च ॥ मदेः

---

१. B उत्तरपदे.

२. B omits मीयते.

३. B omits root and meaning.

४. B omits अजतीति.

५. A omits हस्ती. C space is left out for writing this word.

स्यन् । माद्यतीति **मत्स्यः** जलचरः प्राणिविशेषः ॥ अतेरिथिन् । अतैति[1] सततं गच्छतीति **अतिथिः** आगन्तुः ॥ अङ्गेरुलिः[2] । अङ्गतीति **अङ्गुलिः** करशाखा[3] ॥ कौतेरशः । **कवशः** ॥ यौतेरसः । यौतीति **यवसः** वीरुत् ॥ कृशेरानुक् । कर्शयतीति **कृशानुः** अग्निः ॥

---

## ॥ ४२९ ॥ शॄः करन् ॥ ४—३ ॥

"शॄ हिंसायाम्" अस्मात् करन्प्रत्ययो भवति । नकारः स्वरार्थः । शृणातीति[4] **शर्करा** पाषाणविशेषः[5] ॥

---

## ॥ ४३० ॥ पुषः कित् ॥ ४—४ ॥

"पुष पुष्टौ" दैवादिकः क्रैयादिकश्च । अस्मात्करन्प्रत्ययो भवति किच्च[6] । पुष्यतीति **पुष्करः** ।

"कराग्रं करिणां व्योम कुशेशयमसेः फलम् ।
[7]आननं चानकादीनां ब्रुवते पुष्करं बुधाः ॥"

---

## ॥ ४३१ ॥ कलच्च ॥ ४—५ ॥

पुषेः कलच्प्रत्ययो भवति किच्च । **पुष्कलं** प्रभूतं[8] हिरण्यं च ॥

---

## ॥ ४३२ ॥ गमेरिनिः ॥ ४—६ ॥

"गमॢ गतौ" तस्मादिनिप्रत्ययो[9] भवति । "भविष्यति गम्यादयः" इति साधुः । **गमी** गन्ता ॥

---

१. A and C omit अतति........ गच्छतीति.
२. B omits अङ्गेरुलिः.
३. B omits करशाखा.
४. A and C शृणातेः.
५. A पाषाणफलम्.
६. B omits किच्च.
७. A, B and C आनकं.
८. A and C भूतं.
९. A and C गमेः.

## ॥ ४३३ ॥ आङि णित् ॥ ४—७ ॥

आङ्युपपदे गमेरिनिप्रत्ययो भवति । स णिद्भवति । णित्वादुपधाया वृद्धिः । **आगामी** आगमिष्यतीति । आगन्ता ॥

---

## ॥ ४३४ ॥ भुवश्च ॥ ४—८ ॥

भवतेर्धातोरिनिप्रत्ययो भवति णिच्च । **भावी** । गम्यादित्वात् भविष्यति साधुः ॥

---

## ॥ ४३५ ॥ प्रे स्थः ॥ ४—९ ॥

प्र उपपदे[1] सति तिष्ठतेरिनिप्रत्ययो भवति णिच्च[2] । णित्वात् युक् । प्रस्थास्यैत[3] इति **प्रस्थायी** ॥

---

## ॥ ४३६ ॥ परमे कित् ॥ ४—१० ॥

णिदिति निवृत्तम् । परमशब्द उपपदे तिष्ठतेरिनिप्रत्ययो भवति किच्च[4] । परमे[5] स्थाने तिष्ठतीति **परमेष्ठी** ब्रह्मा । सुषामादित्वात् षत्वम् । "तत्पुरुषे कृति बहुलम्" इत्यलुक् ॥

---

## ॥ ४३७ ॥ मन्थेः ॥ ४—११ ॥

किदित्येव । "मन्थ विलोडने" अस्मादिनिः किच्च भवति । कित्त्वात् "अनिदिताम्" इति नकारलोपः[6] । मन्थतीति मथिन् इति स्थिते[7] "पथि-मथि" इत्याकारः । **मन्थाः** बृहस्पतिः ॥

---

१. B उपसर्गे.
२. B omits णिच्च.
३. A and C प्रस्थास्ये.
४. B omits किच्च.
५. B adds उत्तमे.
६. B नलोपः.
७. B adds सुटि.

## ॥ ४३८ ॥ पत स्थ च ॥ ४—१२ ॥

"पत्लृ गतौ" अस्मादिनिप्रत्ययो भवति । तत्सन्नियोगेन थकारः अन्तादेशः । पत्यते गम्यतेऽनेनेति **पन्थाः** मार्गः ॥

---

## ॥ ४३९ ॥ खञ्जेराकः ॥ ४—१३ ॥

"खजि गतिवैकल्ये" अस्मादाकप्रत्ययो भवति । खञ्जतीति **खञ्जाकः** मन्थः । केचित् किदित्यनुवर्तयन्ति । अन्ये बाहुलकात् नेलोपमिच्छन्ति । अपरे "खजेराकः" इति पठन्ति । "खज मन्थे" खजति मथ्नात्यनेनेति खजाकः । युक्तं चैतत्, अवयवार्थेनानुगमात् । रूढिशब्दानामपि सत्येवावयवार्थे व्युत्पत्तेर्न्याय्यत्वात् । यत्र तु सर्वात्मनार्थानुगमो नास्ति तैलपायिकादौ तत्रैवासदर्थाश्रयणम् । तस्मात् "खजेराकः" इति सूत्रपाठः ॥

---

## ॥ ४४० ॥ बलाकादयश्च ॥ ४—१४ ॥

बलाकादयः शब्दाः आकप्रत्ययान्ता निपात्यन्ते । "बल प्राणने" **बलाका** बिसकण्ठिका ॥ "मन ज्ञाने" मनाका कामनी ॥ "णभ हिंसायाम्" नभाका ॥ गुपेर्वकारः गुणाभावश्च । गुवाकः क्रमुकः । अन्ये "गुद शब्दे" इति भौवादिकस्य आकप्रत्यये बाहुलकादवङादेशे च निपातनमिच्छन्ति ॥ वृतेर्वृद्धिः । वार्ताकम् ॥

---

## ॥ ४४१ ॥ शलिपटिपतिभ्यो नित् ॥ ४—१५ ॥

"शल हुल पत्लृ गतौ" "अट पट गतौ" "पत्लृ गतौ" एभ्यः

---

१. B -स्थक्.
२. A कितमिच्छ-
३. A and C -अवयवार्थानु-
४. A and C मनेः.
५. B -कः.
६. A and C omit root and meaning.

आकप्रत्ययो नित् भवति । शलतीति **शलाका** वर्तिका ॥ पटतीति **पटाकः** वासस उच्छ्रायः ॥ **पताका** ध्वजः ॥

## ॥ ४४२ ॥ पिनाकादयश्च ॥ ४—१६ ॥

[१]निदित्येव । पिनाकादयः आकप्रत्ययान्ता निपात्यन्ते । अत एव नित्वात् बलाकादिभ्यः पृथक् निपातितौः[२] । नित्वमुपजीवितम् । पिबतेराकः नुमागमश्च । आकारस्येत्वम् । [३]पिबति पातीति[४] वा **पिनाकः** ॥ [५]भेवाकः कपोतः ॥ पुनातेः [६]पेवाकः धूर्तः ॥ यजाकः ॥ [७]च्यवाकः कौशिकः ॥ [८]प्रवाकः कर्मकरः ॥ मव्यतेः यकारलोपः मवाकः कनी[९] ॥ श्यैङो मुडागमश्च[१०] । श्यामाकः ॥ " [११]तड आघाते " तडाकम् । पवाकप्रभृतीनि रूपाणि केचित् बलाकादिषु पठन्ति । तेन मध्योदात्तानि[१२] भवन्तीत्याहुः ॥

## ॥ ४४३ ॥ कषिदूषिभ्यामीकन् ॥ ४—१७ ॥

" कष शिष " इति हिंसार्थदण्डके कषिः पठितः । " दुष वैकृत्ये " आभ्यामीकन्प्रत्ययो भवति । कषतीति **कषीका** मक्षिका ॥ [१३]दूषयतीति **दूषीका** लतावीरणजातिः [१४]अक्षिमलं च । बाहुलकात् दुषेर्ण्यन्तात् ईकन् । [१५]तस्मिन् " दोषो णौ " इत्यूत्वम् ॥

## ॥ ४४४ ॥ चङ्क्रण्यतेः कङ्कण च ॥ ४—१८ ॥

क्रणतिः शब्दार्थः । तस्माद्यङन्तात् ईकन्प्रत्ययो भवति । तत्सन्नियोगेन कङ्कणादेशः । चङ्क्रण्यतेऽत्यर्थं शब्दयतीति **कङ्कणिका** क्षुद्रघण्टिका प्रतिसरं च ॥

---

१. A omits नित्........दयः.
२. A and B -पातः.
३. B omits पिब........नाकः.
४. A omits पातीति.
५. A दवाकः.
६. B पावकः.
७. B यवाकः.
८. A and C प्रवतीकः.
९. B हस्तिनी.
१०. A and C omit च.
११. A and C omit root and meaning.
१२. B omits उदात्तानि.
१३. B omits दूष........षीका.
१४. B अक्षिमण्डलं.
१५. B omits तस्मिन्.

॥ ४४५ ॥ शॄपॄवृञां द्वे रुक्चाभ्यासस्य ॥ ४—१९ ॥

"शॄ हिंसायाम्" "पॄ पालनपूरणयोः" "वृङ् संभक्तौ" एभ्य ईकन्प्रत्ययो भवति । एषां द्वे शब्दरूपे [1]द्वे वावृत्ती भवतः; अभ्यासस्य रुगागमश्च । [2]शृणातीति शर्शरीकः अश्वः ॥ पृणाति पूरयति अभिलषितनिधानत्वात् पर्परीकः अग्निः ॥ व्रियत इति वर्वरीकः वारणः [3]तरुणं च ॥

---

॥ ४४६ ॥ पर्फरीकादयश्च ॥ ४—२० ॥

पर्फरीकादय ईकन्प्रत्ययान्ता निपात्यन्ते । "[4]फल निष्पत्तौ" पर्फरभावः । पर्फरीकः [5]मृदुः ॥ "दॄ[6] विदारणे" तिडभावः । तित्तिडीकः वृक्षविशेषः ॥ तिजेः [7]झर्झरभावः । झर्झरीकः ॥ करोतेः कर्करभावः । [8]कर्करीकः जलभाजनम् ॥ मृङः मर्मरभावः । मर्मरीकः [9]शुष्कपर्णम् ॥ "तड आघाते" तिन्त्रिणभावः । [10]तिन्त्रिणीकः ॥ [11]दर्दरीकः इन्द्रः खनित्रं च ॥

---

॥ ४४७ ॥ अनिदृशिभ्यामीकन्[12] ॥ ४—२१ ॥

"[13]अन प्राणने" "दृशिर् प्रेक्षणे" आभ्यामीकन्प्रत्ययो भवति । अनितीति अनीकं सेना ॥ पश्यतीति दृशीकः[14] दर्शकः चक्षुश्च । दृशीकशब्दः[15] ॥

---

१. A and B omit द्वे.
२. B omits शृणातीति.
३. B करुणं.
४. A and C omit root and meaning.
५. A and C omit मृदुः.
६. A दो रणे । तित्तिरिभावः तित्तिरिकः.
C........दो रणे । तित्तिसभावः । तित्तिधीकः ।
७. A झर्भावः.
C झर्झर्भावः.
८. B कर्तरिका.
९. B कृष्णपर्णम्.
१०. A omits the word.
११. A दर्दुरिकः.
B omits the word.
१२. B -भ्यां च.
१३. A and C अनिदृशिभ्यामीकन्.
१४. A omits this word.
१५. B adds कल्पादिति.

## ॥ ४४८ ॥ ऋजेश्च ॥ ४—२२ ॥

"ऋज गतिस्थानार्जनोपार्जनेषु" अस्मादीकन्प्रत्ययो भवति । [1]बाहुलकात् गुणाभावः । **ऋजीकः** ॥

---

## ॥ ४४९ ॥ ईषेः किच्च[2] ह्रस्वश्च ॥ ४—२३ ॥

"ईष उञ्छे" अस्मादीकन्प्रत्ययो भवति किच्च । धातोरचो ह्रस्वश्च । ईषत्यनेनेति **इषीका** तूलिका[3] ॥

---

## ॥ ४५० ॥ सर्तेर्नुं[4] च ॥ ४—२४ ॥

किदित्येव । सर्तेर्धातोरीकन्प्रत्ययो भवति नुमागमश्च । कित्वाद्गुणाभावः । सरतीति **सृणीकः** अग्निः ॥

---

## ॥ ४५१ ॥ मृडेः कीकन्किकनौ[5] ॥ ४—२५ ॥

"मृड सुखने" अस्मात् कीकन् किकन् इत्येतौ प्रत्ययौ भवतः । ककारः कित्कार्यार्थः । [6]नकारः स्वरार्थः । मृडयतीति **मृडीकः** भगम्[7] सुखं च[8] ॥ **मृडिकः** सुखी ॥

---

## ॥ ४५२ ॥ अलीकादयश्च ॥ ४—२६ ॥

अलीकादयः निपात्यन्ते । "अल भूषणपर्याप्तिशक्तिवारणेषु" अस्मात् किकन्प्रत्ययो निपात्यते । अलीकं असत्यं विप्रियं च ॥ "बल प्राणने" बलीकः बलवान् ॥ "कण निमीलने" कणीकं निमीलनं यवविकारश्च ॥ मनेः

---

१. A adds ऋजीकः here and omits later.
२. B कित्.
३. B तूलमज्जा.
४. A नुक्.
५. B omits किकनौ.
६. B omits नकारः स्वरार्थः.
७. A भृङ्गम्.
८. A omits सुखं च.

मनीकं भाजनम् ॥ "व्यय गतौ" यकारस्य लकारः । व्यलीकं [1]अप्रियम् ॥ [2]वसेर्लत्वं मुडागमश्च । वल्मीकम् ॥ लभेः लभीकः ॥ वहेः वृद्धिः । वाहीकः[3] ॥

---

## ॥ ४५३ ॥ कॄतॄभ्यामीषन् ॥ ४—२७ ॥

किरतेः तरतेश्च ईषन्प्रत्ययो भवति । कीर्यत इति **करीषं** गोमयम् ॥ तरतीति **तरीषम्** स्तम्भः व्यवसायः हर्षस्थानं च ॥

---

## ॥ ४५४ ॥ शॄपॄभ्यां कित् ॥ ४—२८ ॥

शृणातेः पिपर्तेश्च ईषन्प्रत्ययः किद्भवति । शीर्यत इति **शिरीषः** वृक्षविशेषः ॥ पिपर्ति [4]शरीरादिकमिति [5]**पुरीषं** मलम् । "उदोष्ठ्यपूर्वस्य" ॥

---

## ॥ ४५५ ॥ अर्जेः कित् ऋज[6] च ॥ ४—२९ ॥

अर्जेरीषन्प्रत्ययः कित् ऋजादेशश्च धातोः । **ऋजीषं** निस्सारम् उदपानं च ॥

---

## ॥ ४५६ ॥ [7]अम्बरीषश्च ॥ ४—३० ॥

अम्बरीषशब्दश्च निपात्यते । "[8]अबि शब्दे" अस्मादीषन्प्रत्ययः अरुगागमश्च धातोः । **अम्बरीषः** भ्राष्ट्रं राजा च ॥

---

## ॥ ४५७ ॥ कॄपॄशॄ[9]कटिपटिशौटिभ्य ईरन् ॥ ४—३१ ॥

---

१. B विप्रियम्.
२. A वक्षेः मुडा-
३. B adds मण्डेः मण्डिकः.
४. B adds पूरयति.
५. B omits this word.
६. A and C ऋजि.
७. A and C omit sūtras IV-30—IV-44, and the commentary thereon.
८. B स्वर्थः । अस्मा-
९. B -पॄगॄकटि- गॄ is probably a scribal error for शॄ.

"कॄ" "पॄ"[1] "शॄ" "कटे वर्षावरणयोः" "पट गतौ" "शौटृ गर्वे" एभ्य ईरन्प्रत्ययो भवति। किरतीति **करीरः** वंशाङ्कुरः॥ **परीरम्** फलम्॥ **शरीरम्** प्राणिकायः॥**कटीरम्** कन्दरं जघनं च॥ पट्यतेऽस्मिन्निति **पटीरं** कन्दुः॥ **शौटीरः** गर्वः॥

## ॥ ४५८ ॥ वशेः कित् ॥ ४—३२ ॥

"वश कान्तौ" अस्मादीरन्प्रत्ययो भवति। कित्। ग्रहिज्यादिना संप्रसारणम्। उश्यत इति **उशीरं** विरैणीमूलम्[2]॥

## ॥ ४५९ ॥ कशेर्मुट् च ॥ ४—३३ ॥

कशेर्धातोरीरन्प्रत्ययः, प्रत्ययस्य मुडागमश्च। **कश्मीरम्**॥

## ॥ ४६० ॥ कृञ उच्च ॥ ४—३४ ॥

करोतेरीरन्प्रत्ययः; धातोरुपान्त्यस्य उकारः; रपरत्वम् च। क्रियत इति **कुरीरम्** मैथुनं कम्बलं च॥

## ॥ ४६१ ॥ घसेः किश्च ॥ ४—३५ ॥

"घसॢ अदने" अस्मादीरन्प्रत्ययो भवति किश्च[3]। चकारात् किच्च[4]। कित्वात् "गमहन" इत्यादिना उपधालोपः। "शासिवसि" इति षत्वम्। पीयत इति **क्षीरं** पयः॥

## ॥ ४६२ ॥ गभीरगम्भीरौ ॥ ४—३६ ॥

---

१. B adds गॄ which also is a probabl cribal error for शॄ.

२. B वरणीमूलम्.

३. B चिच्च.

४. B This sentence is repeated.

गायतेः ह्रस्वत्वम्, मुगागमश्च । **गभीरम्** ।। गमेरीरन्प्रत्ययः भुगागमश्च । **गम्भीरम्** अगाधः ।।

---

## ।। ४६३ ।। विसा[1] विहा ।। ४—३७ ।।

विसा विहा इत्येते निपात्येते । विपूर्वात् स्यत्वे कप्रत्ययः [स्यतेराप्रत्ययः] । **विसा** विसखण्डः ।। विपूर्वात् जहातेः **विहा** विरागः । अव्यये एते द्वे ।।

---

## ।। ४६४ ।। पच एलिमच् ।। ४—३८ ।।

पचेर्धातोरेलिमच्प्रत्ययः । पच्यन्ते **पचेलिमाः** माषाः । स्वरभेदात् प्रत्ययविधानम् ।।

---

## ।। ४६५ ।। भिदेः किच्च ।। ४—३९ ।।

भिदेरेलिमच्प्रत्ययः किच्च । **भिदेलिमानि** काष्ठानि ।।

---

## ।। ४६६ ।। शीङो थुग्लग्वालन्वलञः ।। ४—४० ।।

शीङः थुक् लक् वालन् वलञ् इत्येते प्रत्यया भवन्ति । ककारः कित्कार्यार्थः । नकारः स्वरार्थः । ञकारो वृद्ध्यर्थः स्वरार्थश्च । शाययतीत्यन्तर्भावितण्यर्थात् थुक् । **शीथुः** मद्यविशेषः ।। शेरतेऽस्मिन् सर्वाणीति **शीलं** नियतान्तःकरणम् । "शील समाधौ" इत्यतोऽपि शीलम् ।। शेते जले इति **शैवालं शैवलं** जलशूकम् ।।

---

## ।। ४६७ ।। मृकणिभ्यामूकोकणौ ।। ४—४१ ।।

म्रियतेः कणतेश्च यथासङ्ख्यं ऊक ऊकण इत्येतौ प्रत्ययौ भवतः । म्रियत इति **मरूकः** मयूरः ।। **काणूकः** श्रयः हिंस्रः काकश्च ।।

---

1. B विषा.

## ॥ ४६८ ॥ वलेरूकः ॥ ४—४२ ॥

"वल वल्ल संवरणे" अस्मादूकप्रत्ययः। **वलूकः** उत्पलम् ॥

---

## ॥ ४६९ ॥ उलूकादयश्च ॥ ४—४३ ॥

उलूकादयो निपात्यन्ते। "उच समवाये" अन्त्यस्य लकारः। **उलूकः** कौशिकः ॥ "मल मल्ल धारणे" मलूकः क्रिमिजातिः। "भल भल्ल परिभाषणे" भल्लूकः प्लवः शकुनिः हिंस्रमृगश्च ॥

---

## ॥ ४७० ॥ शलिमण्डिभ्यामूकण् ॥ ४—४४ ॥

"शल ह्वल पत्लृ गतौ" "मडि भूषायाम्। आभ्यामूकण्प्रत्ययः। णकारो वृद्ध्यर्थः। **शालूकं** उत्पलमूलम् ॥ मण्डतीति **मण्डूकः** भेकः ॥

---

## ॥ ४७१ ॥ नेयतेर्मिः ॥ ४—५ ॥

"णीञ् प्रापणे" अस्मान्मिप्रत्ययो भवति। नीयतेऽनेयेति[1] **नेमिः** चक्रधारापरिच्छदः भित्तिमूलं[2] च ॥

---

## ॥ ४७२ ॥ अर्तेरूच्[3] ॥ ४—४६ ॥

अर्तेः मिप्रत्ययो भवति, ऊकारश्चान्तादेशो[4] धातोः। ऋच्छति गच्छतीति **ऊर्मिः** जलकल्लोलः ॥

---

## ॥ ४७३ ॥ अशे[5] रश च ॥ ४—४७ ॥

---

१. B नियो मित्.
२. A अनेन.
३. B भित्तिच्छलात्.
४. B and C -च्च.
५. A अन्तोदात्तो.
६. B अश्नोते रश्च.

अश्नोतेर्मिप्रत्ययो भवति, तत्सन्नियोगेन धातो रश इत्ययमादेशो भवति। अश्नुत इति **रश्मिः** किरणानि ॥

---

## ॥ ४७४ ॥ भुवः कित् ॥ ४—४८ ॥

भवतेर्धातोः मिप्रत्ययः किद्भवति। कित्वाद्गुणाभावः। भवन्ति उत्पद्यन्तेऽस्यामिति **भूमिः** पृथिवी ॥

---

## ॥ ४७५ ॥ दल्मिः ॥ ४—४९ ॥

दल्मिरिति निपात्यते। किमत्र निपात्यते? दृणातेर्मिप्रत्ययः ल्त्वं च। अथ वा "दल विदारणे" "दल भेदे" वा। मिप्रत्ययः। दलति दलयतीति वा **दल्मिः** इन्द्रः ॥

---

## ॥ ४७६ ॥ वीज्याज्वरिभ्यो निः ॥ ४—५० ॥

"वी गतिप्रजनकान्त्यसनखादनेषु" "ज्या वयोहानौ" "ज्वर रोगे" एभ्यो निप्रत्ययो भवति। वीयते बध्यत इति **वेणिः**। बाहुलकात् णत्वम्। केशबन्धः जननी च ॥ जिनात्यनयेति **ज्यानिः** विप्रवाहः वृद्धिश्च। "ग्लाम्लाज्याहाभ्यो निः" इति स्त्रियां विधीयते ॥ ज्वरयतीति **जूर्णिः** आदित्यः अग्निः शरीरं ब्रह्मा च। ज्वरेः "ज्वरत्वर" इत्युपधाया ऊठ् ॥

---

## ॥ ४७७ ॥ सृवृषिभ्यां कित् ॥ ४—५१ ॥

सर्तेः वर्षतेश्च निप्रत्ययः किद्भवति। कित्वात् गुणाभावः। सरत्यनयेति **सृणिः** अङ्कुशः ॥ वर्षतीति **वृष्णिः** यदुविशेषः ॥

---

१. B adds अश्नातीति वा.
२. B adds भवति.
३. B दारयति.
   C दरयति.
४. A and C omit इन्द्रः.
५. B विधीयते.
६. B जनाति.
७. B adds भावे.
८. A and B वृषतेः.

## ॥ ४७८ ॥ अङ्गेर्नलोपश्च ॥ ४—५२ ॥

"अगि" गत्यर्थः । इदित्वान्नुम् । अङ्गेर्निप्रत्ययः, तत्सन्नियोगेन धातोर्नलोपश्च । इदित्वान्नुं सिद्ध्यतीति नलोपवचनम् । प्रत्ययस्य कित्त्वं अस्त्येव, किद्ग्रहणानुवर्तनात् । अङ्गति गच्छति देवानामग्रे हविरादानाय इति **अग्निः** हव्यवाट् । 'अग्रं गच्छति नयतेः' इति नैरुक्ताः । तथा चाहुः "अग्निः अग्रणीः" इति ॥

## ॥ ४७९ ॥ वहिश्रिश्रुयुग्लाहात्वरिभ्यो नित् ॥ ४—५३ ॥

"वह प्रापणे" "श्रिञ् सेवायाम्" "श्रु श्रवणे" "यु मिश्रणे" "ग्लै हर्षक्षये" "ओ हाङ् गतौ" । ङकारः "हश्च व्रीहिकालयोः" इति सामान्यग्रहणार्थः । "ञि त्वरा संभ्रमे" एभ्यो निप्रत्ययः निद्भवति । नित्वादाद्युदात्तत्वम् । वहति ऊह्यतेऽनेनेति वा **वह्निः** अग्निः ॥ श्रयतीति **श्रेणिः** पुरुषसङ्घातः ॥ श्रूयत इति **श्रोणिः** जघनप्रदेशः ॥ यूयते जायतेऽस्या इति अपादाने निः । **योनिः** कारणम् ॥ **ग्लानिः** ॥ **हानिः** क्षयः । भावे "ग्लाम्लाज्याहाभ्यो निः" इति सिद्धे स्वरार्थं पुनर्व्युत्पादनम् ॥ त्वरते **तूर्णिः** मनः श्लोके : अश्वश्च ॥

## ॥ ४८० ॥ घृणिपृश्निपार्ष्णिभूर्णि ॥ ४—५४ ॥

"घृ क्षरणदीप्त्योः" अस्मान्निप्रत्ययो गुणाभावश्च निपात्यते । जिघर्ति दीप्यत इति **घृणिः** रश्मिः ॥ "पृषु सेचने" निप्रत्ययः । शकारोऽन्तादेशो

---

१. A omits अगि........पश्च । इदित्वान्नुम्.
२. B अग्रे.
३. B adds-द्रु-
४. A and C omit meanings.
५. B omits वहति.
६. B omits वह्निः.
७. A and C omit अग्निः.
८. B adds केकार्यं-
९. C श्रोणी.
१०. B omits जघनप्रदेशः.
११. B omits सिद्धे.
१२. B कोशः.
१३. B adds चूर्णि.

गुणाभावश्च । **पृश्निः** अल्पशरीरः ॥ "पार तीर कर्मसमाप्तौ" पारयत्य-नेनेति **पार्ष्णिः**। षुगागमः । [1]चरणस्य पश्चाद्भागः ॥ भृञो निप्रत्ययो गुणाभावः ऊकारश्च । **भूर्णिः** धरणिः ॥

## ॥ ४८१ ॥ पॄदॄभ्यां विन् ॥ ४—५५ ॥

पृणातेः दृणातेश्च विन्प्रत्ययो भवति । पृणातीति[2] **पर्विः** शकटम् कैङ्कश्च[3] ॥ **दर्विः** दारुहस्तः ॥

## ॥ ४८२ ॥ जॄशॄस्तॄजागृभ्यः क्विन् ॥ ४—५६ ॥

"जॄष् वयोहानौ" "शॄ हिंसायाम्[4]" "स्तॄञ् छादने" "जागृ निद्राक्षये" एभ्यः क्विन्प्रत्ययो भवति । नकारः स्वरार्थः । [5]ककारो गुणनिषेधार्थः । [6]विप्रत्ययस्यानेकाल्त्वात् अपृक्तसंज्ञा नास्ति । जीर्यत इति **जीर्विः** फल्गुः[7] पशुः द्रव्यं च ॥ शीर्यत इति **शीर्विः** क्रिमिः न्यङ्कुश्च ॥ स्तृणातीति **स्तीर्विः** रुधिरं नभः पयश्च ॥ जागर्तीति **जागृविः** [8]अग्निः राजा च ॥

## ॥ ४८३ ॥ दिवो द्वे दीर्घश्चाभ्यासस्य ॥ ४—५७ ॥

दिवः क्विन्प्रत्ययो भवति, धातोः द्विवचनम्, अभ्यासस्य दीर्घश्च । [9]दीव्यन्त्यस्मिन्निति **दीदिविः** स्वर्गः ॥

## ॥ ४८४ ॥ कृविघृष्विछविर्दविस्थविकिकिदिविः ॥ ४—५८ ॥

[12]एते शब्दाः क्विन्प्रत्ययान्ता निपात्यन्ते । करोतेः क्विन्प्रत्ययः । करोतीति

---

१. A चरणपश्चा-
२. A omits पृणातीति.
३. B कङ्कटश्च.
४. A and C omit meaning.
५. A and C omit this sentence.
६. B विप्रत्ययः । तस्य.
७. B adds शरः.
८. B अश्नः ॥
९. B omits दी........न्निति.
१०. A and B omit दर्वि.
११. B omits स्थवि.
१२. B omits एते शब्दाः.

**कृविः** तन्तुवायः द्रव्यं च ॥ "घृषु संघर्षे" क्विन्प्रत्ययः । घर्षतीति[१] **घृष्विः** । "वैराहः[२] सूकरो घृष्विः" इति पाठः ॥ "छो छेदने" ह्रस्वत्वं[३] क्विन्प्रत्ययश्च । **छविः** कान्तिः ॥ "दमु उपशमने" क्विन् अन्त्यस्याकारः । **दविः** धर्मशीलः ॥ तिष्ठतेः क्विन्प्रत्ययः[४] ह्रस्वत्वं च । **स्थविः** तुन्नवायः ॥ कौयतेरित्वं[५] द्वित्वं च निपात्यते । कायतीति **किकिः** पक्षिविशेषः ॥ **दिविः** श्वापदः ॥

---

## ॥ ४८५ ॥ पातेर्डतिः ॥ ४—५९ ॥

पातेर्डतिप्रत्ययो भवति टिलोपश्च । **पतिः** स्वामी, पाति रक्षतीति[६] ॥

---

## ॥ ४८६ ॥ शकेर्ऋतिन् ॥ ४—६० ॥

शकेर्धातोः[७] ऋतिन्प्रत्ययो भवति[८] । कृते[९] गर्हते इति **शकृत्** विष्ठा ॥

---

## ॥ ४८७ ॥ अमेरतिः ॥ ४—६१ ॥

"अम गतिभक्तिशब्देषु" अस्मादतिप्रत्ययो भवति । अमतीति **अमतिः** रोगः ॥

---

## ॥ ४८८ ॥ वहिवस्यर्तिभ्यश्चित् ॥ ४—६२ ॥

"वह प्रापणे" "वस निवासे" "ऋ गतौ" एभ्य अतिप्रत्ययो भवति चिच्च । वहतीति **वहतिः** अमात्यः कुटुम्बी च ॥ वसन्त्यस्मिन्निति **वसतिः** गृहम् ॥ **अरतिः** क्रोधः बाष्पं दुःखं च ॥

---

१. B omits घर्षतीति.
२. B वारटा हस्तृकरो.
३. A नो हूस्वत्वं च.
४. B and C omit प्रत्ययः.
५. A कार्यंश्च.
B का - - - - - यंश्च.
६. B adds पतिः.
७. B शक्नोतेः ऋतिन्.
८. A and B omit भवति.
९. B शक्यते अर्हते.
A शकृते

## ॥ ४८९ ॥ अञ्चेः को वा ॥ ४—६३ ॥

अञ्चेरतिप्रत्ययः, ककारश्चान्तादेशो वा भवति । अञ्चतीति **अञ्चतिः** **अङ्कतिः** अग्निः । [1]अञ्चतिशब्दः बह्वादिषु पठितः ॥

---

## ॥ ४९० ॥ हन्तेरंह च ॥ ४—६४ ॥

हन्तेरतिप्रत्ययो भवति, तत्सन्नियोगेन धातोः अंह इत्ययमादेशः, चकारात् चिच्च । [2]हन्यत इति **अंहतिः** मांसं मृगो रथश्च ॥

---

## ॥ ४९१ ॥ रमेर्नित्[3] ॥ ४—६५ ॥

रमेरतिप्रत्ययः[4] । रमन्तेऽस्मिन्निति **रमतिः** स्वर्गः ॥

---

## ॥ ४९२ ॥ षूङः क्रिः ॥ ४—६६ ॥

"षूङ् प्राणिगर्भविमोचने" "षूङ् प्रसवे" वा । षूङः क्रिप्रत्ययः । ककारो [5]गुणनिषेधार्थः । सूते इति **सूरिः** पण्डितः ॥

---

## ॥ ४९३ ॥ अदिशदिभूशुभिभ्यः क्रिन् ॥ ४—६७ ॥

"अद भक्षणे" "शद्लृ शातने" "भू सत्तायाम्" "शुभ शुम्भ शोभार्थे" एभ्यः क्रिन्प्रत्ययो भवति । अत्तीति **अद्रिः** गिरिः ॥ शीयत इति [7]**शद्रिः** गिरिः हस्ती मेघश्च ॥ भवतीति **भूरि** काञ्चनम् ।

"भूरि काञ्चनमिच्छन्ति प्रभूतं भूरि कथ्यते ॥"

शोभत इति **शुभ्रिः** ब्रह्मा सत्त्वं च ॥

---

१. B अङ्कति-
२. A and C अंहते.
३. B निक्.
४. B adds किन्भवति.
५. B वृद्धिप्रतिषेधार्थः.
६. A and C add सुभ्रोरी दीर्घश्च.
७. C शिद्रिः.

## ॥ ४९४ ॥ वङ्क्रयादयश्च ॥ ४—६८ ॥

वङ्क्रि इत्येवमादयो निपात्यन्ते । वञ्चेः गत्यर्थात् क्रिन्प्रत्ययो नकारलोपाभावश्च निपात्यते । वञ्चतीति **वङ्क्रिः** कुटिलम् ॥ उप्यतेऽस्मिन्निति वप्रिः क्षेत्रम् ॥ विशतेः विश्रिः मृत्युः भयं च । विश्रिः गृष्ट्यादिः ॥ कुर्देः क्रीडार्थात्[1] रेफस्य[2] लोपो निपात्यते । कुद्रिः समुद्रः ॥

---

## ॥ ४९५ ॥ राशदिभ्यां त्रिप् ॥ ४—६९ ॥

"रा दाने" "शद्लृ शातने" आभ्यां त्रिप्प्रत्ययो भवति । रातीति **रात्रिः** निशा ॥ शीयतेऽनेनेति **शत्रिः** शान्तिः यानं कुञ्जरश्च ॥

---

## ॥ ४९६ ॥ अदेस्त्रिन् ॥ ४—७० ॥

"अद भक्षणे" अस्मात्त्रिन्प्रत्ययो भवति । प्रत्ययान्तर[3]वचनं स्वरभेदात् । ननु[4] च त्रिप्प्रत्ययेऽपि पित्वात् अनुदात्तत्वम्; त्रिन्प्रत्ययेऽपि नित्वादाद्युदात्तत्वमिति स्वरभेदो नास्ति । एवं तर्हि प्रत्ययान्तरकरणमनर्थकम् । अ[5]त्तीति **अत्त्रिः** ऋषिविशेषः ॥

---

## ॥ ४९७ ॥ [6]पतेरत्रिन् ॥ ४—७१ ॥

पतेरत्रिन्प्रत्ययो भवति । पततीति **पतत्रिः** पक्षी ॥

---

## ॥ ४९८ ॥ मृकणिभ्यामीचिः[7] ॥ ४—७२ ॥

मृङः कणेश्च ईचि[8]प्रत्ययो भवति । **मरीचिः** दीप्तिः ॥ कणति शब्दयतीति **कणीचिः** शब्दः क्षुरश्च ॥

---

1. B क्रीडार्थत्वात्.
2. B रेफस्य.
3. A -करणवचनमनर्थकम्. B प्रत्ययान्तरविधानम्.
4. B adds च.
5. B omits this sentence.
6. B omits the sūtra and the commentary.
7. A and C ईचिन्.
8. A and C ईचिन्-

## ॥ ४९९ ॥ वेञो डित् ॥ ४—७३ ॥

वेञः [1]ईचिप्रत्ययो भवति[2] । डिद्विधानसामर्थ्यात् अभस्यापि [3]टेर्लोपः । वयति सन्ततो भवतीति **वीचिः** ॥

## ॥ ५०० ॥ श्वयतेश्चित् ॥ ४—७४ ॥

"टु ओ श्वि गतिवृद्ध्योः" अस्मादीचिर्[4]प्रत्ययः चिद्भवति । श्वयति गच्छतीति **श्वयीचिः** पुरुषः आदित्यः क्रोधश्च ॥

## ॥ ५०१ ॥ ऋहनिभ्यामुषन् ॥ ४—७५ ॥

अर्तेः हन्तेश्च उषन्प्रत्ययः भवति । अर्यते प्राप्यतेऽनेनेति **अरुषः** क्रोधः ॥ हन्तीति **हनुषः** राक्षसः[5] ॥

## ॥ ५०२ ॥ पुरः कुषन् ॥ ४—७६ ॥

"पॄ पालनपूरणयोः" अस्मात् कुषन्प्रत्ययो भवति । ककारः कित्कार्यार्थः । तेन गुणो न भवति । "उदोष्ठ्यपूर्वस्य" [6]इत्यूत्वम् । पृणाति पूरयति शरीरमिति **पुरुषः** क्षेत्रज्ञः । "पुरि वसतीति पुरुषः" इति नैरुक्ताः । अनुकार्यानुकरणयोः भेदा[7]त्, अर्थस्य विव[8]क्षितत्वात्, अर्थवत्वे प्रातिपदिकत्वेऽनुकरणस्याधातु[9]त्वात्, अधातुरिति निषेधाभावे च पञ्चम्येकवचने उत्वे च [10]पुर इति निर्देशः ॥

## ॥ ५०३ ॥ विदिपुरोश्च[11] ॥ ४—७७ ॥

---

१. A ईचिन्-
२. C omits भवति.
३. B टिलोपः.
४. A ईचिन्-
५. A and C omit राक्षसः.
६. A and C omit इत्यूत्वं.
७. B omits भेदादर्थस्य. C भेदस्य.
८. C space is left out for writing a few syllables.
९. A, B and C असाधुत्वात्.
१०. C space is left out for writing पुर........शः.
११. C -पुरे शः.

"विद ज्ञाने" "विद सत्तायाम्" "विदॆ विचारणे" "विद्लृ लाभे" वा । "पुैर अग्रगमने"[2] आभ्यां कुषन्प्रत्ययो भवति[3] । वेत्तीति **विदुषः** पण्डितः ॥ पुरतीति **पुरुषः** । पृणातेरेव सिद्धत्वात् अनर्थकं पुरग्रहणम् ॥

## ॥ ५०४ ॥ पॄकलिभ्यामुषन् ॥ ४—७८ ॥

"पॄ" "कल सङ्ख्यानशब्दयोः" आभ्यामुषन्प्रत्ययः । **परुषं** श्रवण-कटुकम् । उत्वं बाधित्वा परत्वाद्गुणः[4] ॥ **कलुषं** अप्रसन्नम् ॥

## ॥ ५०५ ॥ नहिकलिहनिलसिभ्य उषच् ॥ ४—७९ ॥

"णह बन्धने" "कैल[5] किल क्षेपणे" "हन हिंसागत्योः" "लस शोषणे" एभ्य उषच्प्रत्ययो भवति । नह्यतीति **नहुषः** राक्षसः[6] ॥ कल्यते क्षिप्यत इति **कलुषं** पापम् । स्वरभेदात् पुनर्व्युत्पादनम् ॥ हन्तीति **हनुषः** राक्षसः ॥ **लसुषः** ॥

## ॥ ५०६ ॥ पीयेरूषन् ॥ ४—८० ॥

पीयः सौत्रो धातुः । अस्मादूषन्[7] प्रत्ययो भवति । पीयत इति **पीयूषं** अमृतम् ॥

## ॥ ५०७ ॥ मस्जेर्नुं[8] च ॥ ४—८१ ॥

"टु मस्जो शुद्धौ" अस्मादूषन्प्रत्ययो भवति नुमागमश्च ।

---

१. B omits root and meaning.
२. A and C add अत्र सन्ततमात्रे वर्तते वयतिः न तु सन्ताने and in C space is left out for a few syllables after सन्ताने.
३. B and C omit भवति.
४. B गुणाभावः.
५. A and C "कल विक्षेपणे."
६. B omits this word.
७. B तस्मात्.
८. A adds मृज्योर्लोपश्च. C adds मृज्यो........शः.

"मस्जेरन्त्यात्पूर्वं नुममिच्छन्ति अनुषङ्गसंयोगादिलोपार्थम्" इत्यन्त्यात्पूर्वं नुमि कृते सकारस्य संयोगादिलोपे मज्जन्ति क्षिपन्त्यस्यामिति **मञ्जूषा** कोष्ठद्रोणीत्यर्थः[1] ॥

---

## ॥ ५०८ ॥ अङ्कूषः ॥ ४—८२ ॥

अङ्कूष इति निपात्यते । अङ्केरूषन्प्रत्ययः । **अङ्कूषः** हस्तप्रहरणं हस्ती वा ॥

---

## ॥ ५०९ ॥ अर्तेररुः ॥ ४—८३ ॥

अर्तेर्धातोररुप्रत्ययो भवति[2] । अर्यते गृह्यत इति **अररुः** मण्डमायुधं च ॥

---

## ॥ ५१० ॥ कुटः कित् ॥ ४—८४ ॥

"कुट कौटिल्ये" अस्मादरुप्रत्ययः किद्भवति । कुटति कुटिलं गच्छतीति **कुटरुः** पक्षिविशेषः वर्धकिश्च[3] । कुटादित्वात् ङित्वेनैव गुणाभावे सिद्धे[4] तस्यानित्यत्वज्ञापनार्थं पुनः कित्वविधानम् । तेन धवित्रमित्यत्र गुणो भवति ॥

---

## ॥ ५११ ॥ शकादिभ्योऽटन् ॥ ४—८५ ॥

"शकॢ शक्तौ" "अव" रक्षणादिषु । "देवृ देवने" "कमु कान्तौ" "वृञ् वरणे" "मर्क" इति सौत्रो धातुः । ककिचकी गत्यर्थौ । एवमादिभ्योऽटन्प्रत्ययो[6] भवति । शक्नोति गन्तुमिति **शकटम्** अनः[7] ॥ अवति रक्षति आश्रितमिति अवटः भुवि श्वभ्रम् ॥ देवते सेवते कर्मजातमिति देवटः शिल्पिविशेषः ॥ काम्यतीति[8] कमटः वानरः ॥ वृणोतीति वरटः पक्षिविशेषः कृकलासो वा ॥ मर्कटः कीशः ॥ कङ्कटः हस्तिन उपरि आरोपितः शयनविशेषः ॥

---

१. A and C कोष्ठद्रोणी.
२. A adds किच.
३. B वल्मीकश्च.
४. B adds गुणाभावे.
५. B adds ङित्वस्य.
६. B omits प्रत्ययो भवति.
७. B omits अनः.
८. A omits काम्य....शयनविशेषः.

॥ ५१२ ॥ अर्तिशॄभ्यामट्टच् ॥ ४—८६ ॥

अर्तेः शृणातेश्च अट्टच्प्रत्ययो भवति । अरट्टः हिंस्रः ॥ शरट्टः स एव ॥

---

॥ ५१३ ॥ कॄकलिकटिकडिभ्योऽम्बच्[1] ॥ ४—८७ ॥

"कॄ विक्षेपे" "कल विक्षेपणे" "कटे वर्षावरणयोः" "कड मदे" एभ्यः अम्बच्प्रत्ययो भवति । कीर्यते संमिश्र्यते इति करम्बः संमिश्रः वायुश्च ॥ कलतीति कलम्बः वृक्षविशेषः ॥ कटम्बः बालः[2] ॥ कडयतीति कडम्बः धान्यविशेषः । बाहुलकात् दकारे कदम्बः[3] वृक्षविशेषः ॥

---

॥ ५१४ ॥ कदेर्णिद्वा ॥ ४—८८ ॥

कदिः सौत्रः[4] । अस्मादम्बच्प्रत्ययो भवति ; णिद्वा भवति ; अस्मिन् पक्षे[5] वा वृद्धिर्भवतीत्यर्थः । कादम्बः पक्षिविशेषः[6] ॥ कदम्बः वृक्षविशेषः[7] ॥

---

॥ ५१५ ॥ कॄञश्च ॥ ४—८९ ॥

[करम्बः[8] ॥]

---

॥ ५१६ ॥ कर्दिकलोरमः ॥ ४—९० ॥

"कर्द कुत्सिते शब्दे" "कल क्षेपे" आभ्याममप्रत्ययो भवति । कर्द्यते कुत्स्यत इति कर्दमः जम्बालः ॥ कलतीति कलमः शालिविशेषः ॥

---

॥ ५१७ ॥ कुणिपुल्योः किन्दच् ॥ ४—९१ ॥

[कुणिन्दः ॥ पुलिन्दः ॥]

---

१. B -कुटिकुडिभ्यां वच्.

२. B काकः.

३. B कटम्बः.

४. B adds धातुः.

५. B परतो विभाषा.

६. A कलहंसः.
B omits the word.

७. B adds पक्षी च.

८. A, B and C. The commentary on IV—89 and 91 is missing, though space is left out in all mss. to write down the commentary.

॥ ५१८ ॥ [1]कुपेर्वा वश्च ॥ ४—९२ ॥

[[2]कुपिन्दः ॥ कुविन्दः ॥]

॥ ५१९ ॥ नौ [3]सञ्जेर्घथिन् ॥ ४—९३ ॥

निशब्द उपपदे सञ्जेर्घथिन्प्रत्ययो भवति[4] । [5]घकारः "चजोः कुः" इति कुत्वार्थः । नकारः स्वरार्थः । [6]नितरां सजन्त्यस्मिन् शरा इति **निषङ्गथिः** धनुर्धरः[7] ॥

॥ ५२० ॥ उद्यर्तेश्चित् ॥ ४—९४ ॥

उदि उपपदे अर्तेः घथिन्प्रत्ययः चिद्भवति[8] । उद्गच्छति उद्गच्छति इति **उदरथिः** समुद्रः ॥

॥ ५२१ ॥ सर्तेर्णित् ॥ ४—९५ ॥

सर्तेः घथिन्प्रत्ययो भवति, णिच्च[10] । णित्वाद्वृद्धिः । सारयति प्रेरयति अश्वादिकमिति **सारथिः** यन्ता ॥

॥ ५२२ ॥ खर्जिपिञ्जादिभ्य ऊरोलचौ ॥ ४—९६ ॥

[11]खर्जादिभ्यः पिञ्जादिभ्यश्च यथासङ्ख्यं ऊर ऊलच् इत्येतौ प्रत्ययौ भवतः । "खर्जू मार्जने" "कृपू सामर्थ्ये" "मीङ् हिंसायाम्" "मृजू शुद्धौ" एभ्य ऊरप्रत्ययः । **खर्जूरः** वनस्पतिविशेषः ॥ कर्पूरः घनसारः ॥

---

१. A and C कपेर्वर्षश्च वा.

२. The commentary on IV-92 is omitted in all mss.

३. B सजेः.

४. B adds णिद्भवति.

५. A omits घकारः........चिद्भवति in the commentary on the next sūtra.

६. C निवराजन्त्यस्मिन्निति.

७. C omits धनुर्धरः.

८. A चिच्च.

९. B उदधिः.

१०. B णिद्वद्भवति. C omits णिच्च.

११. A omits खर्जा........सङ्ख्यं.

मयूरः पक्षिविशेषः ॥ [1]मृजेर्वृद्धिः । मार्जूरः सुवर्णपालिका ॥ पिजिलुजी भाषणार्थे । पिञ्जिः चौरादिकः । "तॄ प्लवनतरणयोः" "फल निष्पत्तौ" "मव बन्धने" ऊलच्प्रत्ययः । पिञ्जयतीति **पिञ्जूलं** पञ्जरयुक्तम् ॥ तरते-रूलच्प्रत्यये बाहुलकाट्टिलोपः । तूलम् पिचुलः ॥ [2]फल्लं [3]मरुविकारः ॥ मवूलः हस्ती ॥

---

## ॥ ५२३ ॥ शृणातेर्णिद्दीर्घश्च ॥ ४—९७ ॥

शृणातेर्धातोः ऊर ऊलच् इत्येतौ प्रत्ययौ भवतः । [4]णिद्वच्च तौ भवतः । धातोः दुगागमश्च दीर्घश्च भवति । शृणातीति **शार्दूलः** द्वीपी ॥

---

## ॥ ५२४ ॥ तमेर्बुक् च ॥ ४—९८ ॥

"तमु काङ्क्षायाम्" तमेरूरऊलच् इत्येतौ प्रत्ययौ भवतः । तत्सन्नि-योगेन धातोर्बुगागमः । बहुलवचनात् दीर्घः । ताम्यतीति **ताम्बूलं** नागवल्ली ॥

---

## ॥ ५२५ ॥ कुवश्चट् दीर्घश्च ॥ ४—९९ ॥

कुवो धातोः चट्प्रत्ययो दीर्घश्च भवति । कौतीति **कूचः** हस्ती [5]ज्योतिः ॥

---

## ॥ ५२६ ॥ [6]सिवेष्टेरू च ॥ ४—१०० ॥

"षिवु तन्तुसन्ताने" सिवेर्धातोः चट्प्रत्ययो भवति । टेः स्थाने ऊकारश्च । सीव्यतेऽनयेति **सूची** सेवनी दर्भतृणँश्च[7] । सूचः दर्पणः[8] ॥

---

१. B omits मृ........द्धिः.
२. B omits the word.
३. B **बदरविकारः**.
४. A and C omit णि........तः.
५. B omits **ज्योतिः** and adds:— टित्वात् ङीप् । कूची प्रमदा । "टिड्ढाणञ्" इत्यादिना ङीप् । दीर्घग्रहणं विस्पष्टार्थम् । प्रकृतं दीर्घ-
६. B omits this sūtra and the portion of the commentary up to **सूची**.
७. A and C **तृणश्च**.
८. A and C add **अमेर्गुरश्च लो वा ॥**

## ॥ ५२७ ॥ शमेर्बन् ॥ ४—१०१ ॥

"शमु उपशमने" अस्माद्धातोः बन्प्रत्ययो भवति । शम्यते मीयतेऽनेनेति **शम्बः** अरित्रं मण्डलं च ॥

---

## ॥ ५२८ ॥ उल्बादयश्च ॥ ४—१०२ ॥

उल्बादयः शब्दा बन्प्रत्ययान्ता निपात्यन्ते । "उच समवाये" चकारस्य लकारादेशो निपात्यते । **उल्बः** गर्भप्राकारः ॥ "णीञ् प्रापणे" अस्य ह्रस्वत्वं मुगागमश्च निपात्यते । निम्बः अरिष्टः ॥ "शुच शोके" शुचेर्बन्प्रत्ययः । अस्य धातोः अन्त्यस्य लकारादेशो निपात्यते । अगुणत्वम् । शुल्बम् मानम्[1] रज्जुः ताम्रश्च ॥ "टु वम उद्गिरणे" अस्यादेर्बकारादेशः, इत्वं च निपात्यते उप-धायाः[2] । बिम्बं प्रतिरूपं फलं च ॥

---

## ॥ ५२९ ॥ स्थस्तोऽम्बजबकौ ॥ ४—१०३ ॥

तिष्ठतेः अम्बच् अबक इत्येतौ प्रत्ययौ भवतः । थकारस्य तकारः । **स्तम्बः स्तबकः** पुष्पसङ्घातः[3] ॥

---

## ॥ ५३० ॥ हृसृभ्यां[4] क्वनिप् ॥ ४—१०४ ॥

हरतेः सर्तेश्च[5] क्वनिप्प्रत्ययो भवति । ककारः कित्कार्यार्थः । पकारस्तुगर्थः । हरतीति **हृत्वा** मत्स्यहन्ता ॥ सरतीति **सृत्वा** भीरुकः । हृत्वरी सृत्वरी । "वनो र च" इति ङीप् ॥

---

## ॥ ५३१ ॥ सृजेरम्च ॥ ४—१०५ ॥

"सृज विसर्गे" अस्मात् क्वनिप् । धातोरमागमे यणादेशः । सृज्यत इति **स्रज्वा** पटः प्रजापतिः संघातश्च[6] ॥

---

1. A and C omit मानम्.
2. B omits उपधायाः.
3. B पुष्पायाम्.
4. B omits हृसृभ्यां.
5. B omits सर्तेश्च.
6. A and C omit च.

## ॥ ५३२ ॥ शाशपिभ्यां ददनौ ॥ ४—१०६ ॥

"शो तनूकरणे" "शप आक्रोशे" आभ्यां यथासंख्यं द दन् इत्येतौ प्रत्ययौ भवतः। श्यति तनूकरोतीति **शादः** निषद्वरः बन्धः सुवर्णं च ॥ शपेर्दन्। "झलां जश् झशि" इति जश्त्वे शप्यत इति **शब्दः** श्रोत्रग्राह्यः। "शब्द शब्दक्रियायाम् उपसर्गादाविष्कारे च" इति चौरादिकः। तस्मात् शब्द्यत इति घञि सिद्धे रूपे स्वरे च प्रपञ्चार्थं व्युत्पादनम्। ननु च शब्दयतेर्ण्यन्तात् "एरच्" इति अचा भवितव्यं कर्मणि, "अकर्तरि च कारके संज्ञायाम्" इत्यधिकारात्। तथा च स्वरे विशेषः। नैतदस्ति। णिजन्तव्यतिरिक्तेकारान्तेभ्य एरच् भवति तदुक्तम् "एरजण्यन्तानामिति वक्तव्यम्" इति वृत्तिकारेण। भाष्यकारस्य मतेन एरच् ण्यन्तानां नास्तीति [अस्तीति] अविशेषेणेवर्णान्त-मात्रादेर्वा भाव्यम्। "कल्पादिभ्यः प्रतिषेधः" इति भाष्यकारस्य दर्शनम्। अस्मिन्नपि दर्शने कल्पादित्वात् घञ् भविष्यतीति प्रपञ्चार्थमेव व्युत्पादनम् ॥

---

## ॥ ५३३ ॥ अब्दादयश्च ॥ ४—१०७ ॥

अब्दादयः शब्दाः निपात्यन्ते। "अद भक्षणे" दप्रत्ययः। बकारश्चान्तादेशः। अत्तीति **अब्दः** संवत्सरः। अपो ददातीति व्युत्पत्त्या रूपमेव सेत्स्यति; स्वरो न सिद्ध्यति, दप्रत्ययान्तत्वादब्दशब्दस्य। किं च अवग्रहे च दोषः स्यात् ॥

अपरा वृत्तिः। "आपॢ व्याप्तौ" अस्य उपधाया ह्रस्वत्वं च निपात्यते। पकारस्य जश्त्वं अब्द इति ॥ "मन ज्ञाने" मन्यत इति मन्दः अलसः।

"मन्दोऽपटुरभाग्यश्च ज्ञेयो मूढोऽज्ञ एव च" ॥

---

1. B श्रवण-
2. A and C add इति.
3. B अचागं भवि-
4. B कारकान्ते-
5. A and C adds एकारान्तेभ्यः.
6. B and C एरजण्य-
7. A and C वर्णं तमन्नाख्यं.
8. A and C कल्पना.
9. A and C omit स्वरो न सिद्ध्यति.
10. B omits अब्द-
11. A and C मन्दो रुरुर-

" मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु " इति मन्दतेः पचाद्यचि मन्द-सिद्धिः ॥ " कुण शब्दोपकरणयोः " तस्मात् दन्। णकारस्य नकारः। कुन्दः लताविशेषः[1] ॥ [2]" कण निमीलने " णकारस्य नकारादेशः। कन्दः। " कदि क्रदि क्लदि आह्वाने " कन्दतेरचि कन्दसिद्धिः। कन्दं मूलम् ॥ वृङो गुणाभावः नुमागमश्च। बाहुलकात् बकारः। वृन्दं बृन्दमिति वा ॥

## ॥ ५३४ ॥ वलिमलितनिभ्यः कयन् ॥ ४—१०८ ॥

" वल वल्ल संवरणे " " मलै[3] मल्ल धारणे " " तनु विस्तारे " एभ्यः कयन्प्रत्ययो भवति। ककार उत्तरत्र गुणनिषेधार्थः। नकारः स्वरार्थः। वल्यतेऽनेनेति **वलयं**[4] प्रकोष्ठभूषणम् ॥ मलति धारयतीति **मलयः** पर्वतविशेषः ॥ तनोति विस्तारयति प्रीतिमिति **तनयः** पुत्रः ॥

## ॥ ५३५ ॥ वृह्रोःषुग्दुकौ च ॥ ४—१०९ ॥

" वृङ् वरणे " " वृङ् संभक्तौ " वा " हृञ् हरणे " आभ्यां[5] कयन्प्रत्ययो भवति। प्रत्ययसन्नियोगेन धातोः यथासंख्यं षुक् दुक् इत्येतावागमौ भवतः। व्रियत इति **वृषयः** श्रेष्ठः ॥ हरति सर्वमात्मगतं करोतीति **हृदयं** मनः ॥

## ॥ ५३६ ॥ मापो रुरी च[6] ॥ ४—११० ॥

" माङ् माने " गामादाग्रहणेष्वविशेषः। " पा पाने " आभ्यां रुप्रत्ययो भवति[7], तत्सन्नियोगेन मापोरलोन्त्यस्य इकारश्चान्तादेशः। मिमीत इति **मेरुः**

१. B वृक्षविशेषः.
२. B omits " कण........कन्दः.
३. B omits root and meaning.
४. B वलयः.
५ B changes the order of the two roots and omits वा.
६. A, B and C रि च.
७. A and C omit भवति.

सुवर्णगिरिः राजा च ॥ पिबति रश्मिभिः जलजातमिति **पेरुः** आदित्यः प्राजापतिश्च । पातीति कृत्वा बाहुलकात् पातेरपि ग्रहणम् । [1]इकारे विधातव्ये ईकारविधानमनर्थकम् । "इ च" इति वा सूत्रम्[2] ॥

---

## ॥ ५३७ ॥ जत्र्वादयश्च ॥ ४—१११ ॥

जत्र्वादयो रुप्रत्ययान्ता निपात्यन्ते । यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनाद्भवति । "जनी प्रादुर्भावे" तस्माद्रुः, नकारस्य च तकारः । **जत्रुः** मेघः घर्मः असिः आसनं शरीरैकदेशः ॥ "शद्लृ शातने" तस्मात् णिद्वत् । शातयिता शत्रुः सपत्नः[3] ॥ गमेः गत्रुः गमनशीलः ॥ शेरुः स्वप्नः ॥ तनिर्विपूर्वः । नकारस्य तकारः । वितत्रुः नदी ॥ शीङो गुक् ह्रस्वत्वं च । शिग्रु गृञ्जनम् ॥ "शश प्लुतगतौ" मुमागमः । अकारलोपश्च । श्मश्रुः[4] दीर्घरोमः ॥ "श्मनि श्रयतेर्डुन्" इति व्युत्पत्त्यन्तरं वक्ष्यति ॥

---

## ॥ ५३८ ॥ रुशातिभ्यां क्रुन् ॥ ४—११२ ॥

"रु शब्दे" "शतिः" सौत्रः । आभ्यां क्रुन्प्रत्ययः । ककारः कित्कार्यार्थः । रौतीति **रुरुः** मृगः ॥ **शत्रुः** रिपुः । जत्र्वादित्वात् रूपे सिद्धे पुनर्वचनं स्वरार्थम् ॥

---

## ॥ ५३९ ॥ कुंसेरूलोम्भोण्डोमेदेताः किच्च[5] ॥ ४—११३ ॥

[7][**कुसूलम्** ॥ **कुसुम्भः** ॥ **कुसुण्डः** ॥ **कुसुमम्** ॥ **कुसीदम्** ॥ **कुसितः** ॥]

---

1. A and C omit इकारे........ सूत्रम्.
2. A Breaks off at this stage.
3. B सत्रः
4. B श्मत्रुः
5. B कसेर्रूलोटोण्योर्थोमिदकात् किद्.
6. C omits किच्च.
7. The Commentary on Sūtra IV—113 is missing in both the manuscripts. In C. space is left out for writing the commentary but not in B.

## ॥ ५४० ॥ जनिदाच्युसृवृमदिशमिशदिनमिभृञ्भ्यः इत्वन्-त्वन्त्नण्क्निन्शक्स्यखठटाटचः ॥ ४—११४ ॥

" जनी प्रादुर्भावे "। गामादाग्रहणेष्वविशेषः। " च्युङ् गतौ " " सृ गतौ " " वृञ् वरणे " " वृङ् संभक्तौ " वा। " मदी हर्षे " " मद तृप्तिशोधनयोः " वा। " शमु उपशमने " " शद्लृ शातने " " णमु प्रह्वत्वे " " भृञ् भरणे " एभ्यो यथासंख्यं इत्वन् त्वन् त्नण् क्निन् शक् स्य ख ठ ट अटच् इत्येते प्रत्यया भवन्ति। जनयत इति **जनित्वौ** मातापितरौ ॥ **दात्वं** दानम् ॥ **च्यौत्नं** रात्रिः ॥ ककारस्येत्संज्ञा न भवति बाहुलकात्। **सृक्विणः** अङ्कुशः चन्द्रः सूर्यः वायुश्च[1] ॥ **वृशः** आर्द्रकः औषधश्च[2, 3] ॥ **मत्स्यः**। धातुविहितानामायन्नादयो न भवन्ति, ऋतेरीयङ्वचनात् ज्ञापकात् ॥ शमेः खः। **शङ्खः** ॥ बाहुलकात् क्वचित् प्रत्ययादिसंज्ञापि नास्तीति प्रत्ययादेरुच्यमान ईनादेशो न भवति। शदेः ठः। **शठः** खलः। बाहुलकात् ठस्येकादेशो न भवति ॥ नमेर्मलोपः। **नटः** शैलूषः। " नट अवस्कन्दने " चौरादिकः। तस्मादपि[4] पचाद्यचि नटः ॥ **भरटः** कुलालः ॥

---

## ॥ ५४१ ॥ अन्येभ्योऽपि दृश्यन्ते ॥ ४—११५ ॥

अन्येभ्योऽपि धातुभ्यः इत्वन्नादयो भवन्ति [5]यथा दृश्यन्ते। दृशिग्रहणं प्रयोगानुसरणार्थम्। तेन अविशेषेण इत्वन्नादयो न भवन्ति। पिबतेः **पेत्वम्** ॥ **होत्वम्** ॥ लूञः **लूनिः** ॥ कृशः शक्। " कृश तनूकरणे " इतोऽपि इगुपधत्वात् के **कृशः** ॥ " कच बन्धने "। **कच्छः** अपानप्रदेशः[6] ॥ मनेः[7] **मङ्खः** मण्डलम् ॥

---

१. B omits चन्द्रः........वायुः.
२. C adds अविभागः.
३. B adds असंविभागः.
४. C अस्मादपि.
५. B omits यथा........भवन्ति.
६. B -देशः.
७. C omits मनेः.

अपरा वृत्तिः। अन्येभ्योऽपि धातुभ्यः एते प्रत्यया दृश्यन्ते। पातेः पिबतेर्वा पेत्वं अमृतं मुखं च ॥ " प्यायी ओ प्यायी वृद्धौ " प्यत्वम् ब्राह्मणः समुद्रो नेत्रं च ॥ " हु दानादानयोः " होत्वम् ॥ लुनातेः लूनिः ॥ पवतेः पूनिः ॥ " ओ हाक् त्यागे " हानिः ॥ " पा रक्षणे " पाणिः करः। उणादिबाहुल्याण्णत्वम् ॥ " वन षण संभक्तौ " शक्। " अनुदात्तोपदेश " इत्यादिनानुनासिकलोपः। वशः प्रवणः ॥ वनेः ठप्रत्ययः। " नश्चापदान्तस्य " इत्यनुस्वारः परसवर्णत्वं च। वण्ठः आयुधीयः ॥ " मन ज्ञाने[2] " मखः क्रतुः चित्रपटिकश्च ॥ " तनु विस्तारे " अटच्प्रत्ययः। " अनुदात्तोपदेशे[3] " इत्यादिनानुनासिकलोपः। तटः कूलम्। वनेः अटच्प्रत्ययः, अनुनासिकलोपश्च[4]। वटः न्यग्रोधः ॥ " डु भृञ् धारणपोषणयोः " भरटः[5] भृशं अत्यर्थम् ॥ " अव रक्षणे " अटच्प्रत्ययः। अवटः[6] कूपः इति ॥

---

## ॥ ५४२ ॥ मूशक्यविभ्यः क्लः ॥ ४—११६ ॥

" मूङ् बन्धने " "शक्लृ शक्तौ" " अवि शब्दे" एभ्यः क्लप्रत्ययो भवति। ककारः कित्कार्यार्थः। मूयतेऽनेनेति मूलम् कन्दः[7]। " मूल प्रतिष्ठायाम् " अतोऽपि पचाद्यचि मूलम् ॥ शक्नोतीति शक्लः मधुरवाक् ॥ अम्लः रस-विशेषः ॥

---

## ॥ ५४३ ॥ सानसिधर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वल-धिष्ण्यशल्याः ॥ ४—११७ ॥

सानसिप्रभृतयो निपात्यन्ते। षणेरसिः; निपातनादुपधाया दीर्घत्वम्। सन्यत इति सानसिः हिरण्यम् ॥ धृङोऽसिः। धर्णसिः[8] जलम् ॥ [10]पिबतेः

---

१. C omits आदिना.
२. B omits root and meaning.
३. B omits उपदेश-
४. C omits च.
५. C omits भरटः
६. B omits अवटः
७. B omits कन्दः.
८. B -वर्णसि-
९. B सानन्नित्रृ-
१०. B विवर्तेः वर्णसिः जलेकहम्. C Space is left out for a few syllables.

**पर्णसिः** जलरूढम् ॥ " तडि ताडने " तण्डेरुलच् । तण्ड्यत इति **तण्डुलः** प्रसिद्धः ॥ " अकि लक्षणे " अङ्केरुशः । **अङ्कुशः** सृणिः ॥ " चष भक्षणे " आलच् । **चषालः** । चषालो यूपकटकः ॥ " इल स्वप्ने " अस्माद्वलच्, गुणाभावश्च । सर्वदा स्वपितीति [1]**इल्वलः** । इल्वलो नाम राक्षसः कश्चित् । " पल रक्षणे " वल च । **पल्वलम्** क्षुद्रप्रस्रवणम् ॥ धिषेः[3] **धिष्ण्यं** गृहम् ॥ शलेर्यत् । **शल्यम्** अन्तर्गतवस्तुविशेषः ॥

अपरा वृत्तिः । एते शब्दाः प्रत्ययान्ता निपात्यन्ते सप्रकृतिका सप्रत्ययाश्च । " षोऽन्तकर्मणि " " षुञ् अभिषवे " " षिञ् बन्धने " वा[4] । आनसिप्रत्ययः अन्तलोपश्च निपात्यते । **सानसिः** हिरण्यम् ॥ " धृञ् धारणे " णिच्प्रत्ययः । णिलोपः [6]नसिप्रत्ययः ह्रस्वत्वं च निपात्यते ॥ **धर्णसिः** कृमिजातिः याजनकश्च ॥ " डु धाञ् धारणपोषणयोः " नसिप्रत्ययः । दधातेर्वा रुगागमः ह्रस्वत्वं च निपात्यते । धर्णसिः जलरुहः ॥ " पॄ पालनपूरणयोः " नसिप्रत्ययः गुणः रपरत्वंच । णत्वं च । **पर्णसिः** जलरुह एव ॥ " तड आघाते " उलप्रत्ययः नुं च[9] । तण्डुलः । " तनु विस्तारे " उलप्रत्ययः, तण्डु इत्ययमादेशः । तण्डुलः धान्यसारः ॥ " अकि लक्षणे " " अञ्चु गतिपूजनयोः " अनयोरुशप्रत्ययः [10]भवति । अञ्चेः कुत्वं निपात्यते । अञ्चति अङ्कति वा **अङ्कुशः** हस्तिदमनः ॥ " चष भक्षणे " [11]आलच्प्रत्ययः । **चषालः** यूपाग्रम् ॥ " इल प्रेरणे " " इषु इच्छायाम् " अनयोर्वलप्रत्ययः । इषेः लत्वं निपात्यते । **इल्वलः** मत्स्यः [12]राक्षसश्च ॥ " पतॢ गतौ " वलप्रत्ययः पदो लान्तादेशः । **पल्वलम्** सरः देवखातम् ॥ " ञि धृषा प्रागल्भ्ये " कन्यन्प्रत्ययः

---

१. B adds प्रत्ययो भवति.
२. B omits इल्वलः.
३. B adds ण्यत्.
४. C omits वा.
५. C " डुधा ञ् धारणे ".
६. B omits नसिप्रत्ययः.
७. B धञ्.
८. C omits वा.
९. C omits च.
१०. C omits भवति.
११. C आलप्र-
१२. B omits राक्षसश्च.

धिषभावः ; णत्वम् ; कित्वाद्गुणप्रतिषेधः । धिष्ण्यं नक्षत्रम् ॥

"तारा हुताशनश्चैव धिष्ण्यं स्थानं तथा गृहम्" ॥

"शल हुल पत्लृ गतौ" यप्रत्ययो निपात्यते । शलतीति **शल्यम्** कण्टकादि । शल्यः मद्रराजश्च ॥

---

## ॥ ५४४ ॥ माच्छाससिसूभ्यो यः ॥ ४—११८ ॥

"माङ् माने" "च्छो छेदने" "सस स्वप्ने" "षू प्रेरणे" एभ्यो यप्रत्ययो भवति । "अजाद्यतष्टाप्" । **माया** शाम्बरी ऐश्वर्यविभूतिश्च ॥ **छाया** आतपविपर्ययः पर्णानुगता दीप्तिश्च ॥ **सस्यं** सर्वोत्पत्तिस्थानम् ॥ सूयत इति स्थिते गुणः । "वान्तो यि प्रत्यये" इत्यवादेशः । **सव्यः** वामबाहुः ॥

---

## ॥ ५४५ ॥ जनेर्यक् ॥ ४—११९ ॥

"जनी प्रादुर्भावे" अस्मात् यक्प्रत्ययो भवति ॥ जन्य[2] इति स्थिते "ये विभाषा" इत्यात्वं विभाषा भवति । जायतेऽस्यामिति **जाया** भार्या । अधिकरणे यक् । अत एव स्मृतिकारैरुक्तम्—

"जायायास्तद्धि जायात्वं यदस्यां जायते पुनः" इति ।

अधिकरणे यक्प्रत्ययान्तत्वादेवमुक्तम् । यत्राकारो न भवति तत्र जन्या वधूः ॥

---

## ॥ ५४६ ॥ अघ्न्यादयश्च ॥ ४—१२० ॥

अघ्न्यादयो[4] निपात्यन्ते । "अघि गत्याक्षेपे" अङ्घते[5] अङ्घः नलोपः[6] नुमागमश्च । **अघ्न्या**[7] गौः ॥ बन्धेर्वकारः[8] । यक् । बध्यते प्रतिबध्यतेऽस्यां गर्भे

---

१. B omits कित्वात्.
२,३. B जनय इति.
४. C अघ्र्या-
५. B adds इमान्.
६. C यलोपः.
७. C अघ्र्यं गौः......॥
८. C बन्धेर्यत् । आदेः वकारः । बध्यते ।

इति वन्ध्या वेशा[1] ॥ धाञः संपूर्वात् सन्ध्या ॥ "कनी" दीप्त्यादिषु । कन्या ॥ शकेः शक्यम् ॥ निपातनादन्तस्वरितत्वम्[2] ॥

अपरा वृत्तिः । अघ्न्यादयः[3] शब्दाः यक्प्रत्ययान्ता निपात्यन्ते । "हन हिंसागत्योः" यक्प्रत्ययः । "गमहनजनखनघसां[4] लोपः क्ङित्यनङि" इति उपधालोपः । ननु चाजादौ क्ङित्युपधालोपः ; इह तु हलादित्वान्न प्राप्नोति । नैष दोषः । निपातनसामर्थ्यात् हलादावपि भवति । "हो हन्तेः" इति घत्वम् । ननु यत्रापि निमित्ताद्विना[5] कवर्गादेशो न[6] प्राप्नोति, अत्रापि निपातनसामर्थ्यादेव भवति । हन्यत इति अघ्न्या[7] गौः ॥ "डु धाञ् धारणपोषणयोः" संपूर्वाद्धातेः यक्प्रत्ययः[8] आकारलोपश्च । सन्ध्या प्रत्यूषः दिवावसानञ्च ॥ "कनी दीप्तिकान्तिगतिषु" कन्या[9] कुमारी । "कमु कान्तौ" मकारस्य नकारो निपात्यते । कन्या ॥ "बन्ध बन्धने" बकारस्य वकारादेशो निपात्यते । वन्ध्यः अनपत्यः ॥ "मृङ् प्राणत्यागे" यक्प्रत्ययः । गुणो निपात्यते । मर्त्यः मनुष्यः[10] ॥

---

## ॥ ५४७ ॥ स्नापदिमद्यर्तिपॄशकिभ्यो वनिप् ॥ ४—१२१ ॥

"ष्णा शौचे" "पद गतौ" "मद तृप्तिशोधनयोः" "ऋ गतौ[11]" "पॄ[12] पालनपूरणयोः" "शक्लृ शक्तौ" एभ्यो वनिप्प्रत्ययो भवति । **स्नावा** शरीरसन्धिः[13] ॥ **पद्वा** गतिः ॥ **मद्वा** तृप्तिः ॥ **अर्वा**[14] अश्वः ॥ **पर्वा** ग्रन्थिः ॥ **शक्वा** अजगरः ॥

---

१. B omits **वशा.**
२. C **स्वरितम्.**
३. C अघ्न्यां-
४. B "**गमहन**" **इति.**
५. C **निमित्तत्वाद्विना वर्गा-**
६. C space is left out for writing **न.**
७. C **अघ्यां.**
८. B **यप्रत्ययः.**
९. C omits **कन्या कुमारी.**
१०. B adds **इति.**
११,१२. B omits root and meaning.
१३. B **-सिद्धिः.**
१४. C omits **अर्वा अश्वः.**

## ॥ ५४८ ॥ शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥ ४—१२२ ॥

"शीङ् स्वप्ने" "क्रुश आह्वाने रोदने च" "रुह बीजजन्मनि" "जि जये" "क्षि क्षये" "क्षि निवासगत्योः" वा "सृ गतौ" "धृङ् अवस्थाने" एभ्यः क्वनिप्प्रत्ययो भवति। शीङो बाहुलकात् ह्रस्वत्वम्। **शिवा** सृगालः ॥ क्रोशतीति **क्रुश्वा** गोमायुः ॥ रोहत्यस्मिन्निति **रुह्वा** प्रा[1]वृट्कालः ॥ जीयत इति **जित्वा** शत्रुः ॥ **क्षित्वा** वायुः ॥ **सृत्वा** प्रजापतिः ॥ **धृत्वा** विष्णुः ॥ धृत्वरी भूमिः ॥

## ॥ ५४९ ॥ ध्याप्यायोः प्रसारणं च ॥ ४—१२३ ॥

"ध्यै चिन्तायाम्" "स्फायी ओ [2]प्यायी वृद्धौ" आभ्यां क्वनिप्प्रत्ययो [3]भवति प्रसारणं च। "[4]हलः" इति दीर्घत्वम्। **धीवा** कर्मकरः। धीवरी कर्मकरी निषादस्त्री ॥ [5]**पीवा** बलवान्। पीवरी तरुणी ॥

## ॥ ५५० ॥ अतेर्धश्च ॥ ४—१२४ ॥

"अत सातत्यगमने" अस्मात् क्वनिप्प्रत्ययो [6]भवति धश्चान्तादेशः। **अध्वा** पन्थाः। "[7]अदेर्धश्च" इति केचित् सूत्रं पठन्ति। मांसशोणितवीर्यायूंषि अत्तीति अध्वा ॥

## ॥ ५५१ ॥ प्रेरिसदोस्तुट् च ॥ ४—१२५ ॥

"ईर प्रेरणे" "षद्लृ विशरणे" प्रपूर्वौ। आभ्यां क्वनिप्प्रत्य[8]यः तुडागमश्च भवति। [9]**प्रेत्वा** सागरः नगरं च ॥ **प्रसत्वा** धर्मः ॥

---

१. B प्रावृट्कालः.
२. C omits ओ प्यायी.
३. C omits भवति.
४. B omits "हलः" इति दीर्घत्वं but reads धीवा। संप्रसारणे "हलः" इति दीर्घत्वम्। कर्मकरः ॥
५. B वापी.
६. C omits भवति.
७. B omits "अदेर्धश्च"........ अध्वा ॥
८. C omits प्रत्ययः.
९. B प्रेरित्वा.

## ॥ ५५२ ॥ इन् सर्वधातुभ्यः ॥ ४—१२६ ॥

सर्वधातुभ्यः इन्प्रत्ययो भवति । हरति पापमिति हरिः विष्णुः ॥ रौते[1] रविः आदित्यः ॥ कौतेः कविः पण्डितः ॥ कटिः जघनं च ॥ यजिः यजमानः ॥ वहिः अनड्वान् ॥ वासिः तैक्ष्णसाधनम्[2] ॥ हविः आज्यादिकम् ॥ वटिः [3]पिण्डशेषः ॥ बलिः[4] ॥ असिः ॥ ऋषिः[5] ॥ धात्वधिकारात् धातुविशेषस्यानुपादानाद्धातु[6]मात्रपरिग्रहे सिद्धे सर्वग्रहणं विस्पष्टार्थम् ॥

---

## ॥ ५५३ ॥ पचिपठिकाशिवाशिनदिभ्य इन् ॥ ४—१२७ ॥

" डु पचष् पाके " " पठ व्यक्तायां वाचि " " काशृ दीप्तौ " " वाशृ शब्दे " " टु नदि समृद्धौ " एभ्य इन्प्रत्ययः । पचतीति पचिः अग्निः ॥ पठिः ॥ काशी वाराणसी । कृदिकारादीकारश्च । काशिः काशी ॥ वाशिः[7] ॥ नन्दिः वृषभः ॥

---

## ॥ ५५४ ॥ हृपिशिरुहिवृतिविदि[8]कीर्तिभ्यश्च ॥ ४—१२८ ॥

" हृञ् हरणे[9] " " पिश अवयवे " " रुह बीजजन्मनि " " वृतु वर्तने " " विद ज्ञाने " " विद सत्तायाम् " " विद्लृ लाभे " " विद विचारणे " वा । " कृत संशब्दने " एभ्य इन्प्रत्ययो भवति । हरतीति हरिः मण्डूकः सिंहश्च ॥ पेशिः मांसविशेषः ॥ रोहिः तपस्वी ॥ वर्त्यतेऽ[10,11]नेनेति वर्तिः ॥ वेदिः संस्कृता भूमिः ॥ कीर्तिः यशः ॥ " इन् सर्वधातुभ्यः " इत्यस्यैवोदाहरणप्रपञ्चमेतत् ।

---

1. B omits रौतेः.
2. C क्षेमसाधनम्.
3. B वटपिष्टविशेषः.
4. C after बलिः space is left out for writing a few syllables.
5. B मषिः.
6. C धातुमार्गविग्रहे.
7. C omits this word.
8. B पिषि- C विशि-
9. B adds छिदि.
10,11. C omits meanings.
12. B अनेन.

[1]सुसंगृहीतञ्च नाम यथा स्यादिति प्रपञ्चः। तथा चोक्तम् "ते वै विषयः सु[2]संगृहीता येषां लक्षणं प्रपञ्चश्च" इति ॥

---

## ॥ ५५५ ॥ इगुपधात् कित् ॥ ४—१२९ ॥

इगुपधाद्धातोरिन्प्रत्ययः किच्च भवति। कित्वाद्गुणाभावः। कृषेः कृषिः [3]कर्षणम्। विलेखनमात्रमिति "इक् कृषादिभ्यः" इति इक्प्रत्ययान्तेनाभिधीयते। अनेन तु कर्षणविशेष इत्युदाहरणम्। अथ तत्रापि बहुलानुवर्तनात् संज्ञाप्रसिद्धिः। एवं तर्हि विस्पष्टार्थं उदाहरणम्॥ शुचेः शुचिः शुद्धि[4]द्रव्यम्॥ च्छिदिः॥ भिदिः वज्रम्॥ "ऋष गतौ" ऋषिः मन्त्रद्रष्टा। गत्यर्थत्वाद्दृषे[5]र्ज्ञानार्थत्वान्मंत्रं दृष्टवन्त ऋषयः॥ "रुच अभिप्रीत्यां च" रुचिः वस्तुष्वभिलाषः॥ [6]तिथेः तिथिः॥

---

## ॥ ५५६ ॥ भ्रमेः संप्रसारणं च ॥ ४—१३० ॥

"भ्रमु चलने" "भ्रमु अनवस्थाने" [7]वा, द्वयोरपिग्रहणं विशेषानुपादानात्। ननु च[8] द्वावप्येतौ [9]धातू एकार्थाविव दृश्येते। नैतदस्ति, भिन्नार्थावितौ। तथा हि चलन्नपि कार्येषु स्थिरारम्भी स्थिर इत्युच्यते, अचलन्नपि कार्येष्वनवस्थितः [10]अस्थिर इति। अतोऽर्थभेदादुभयोरपि ग्रहणम्। भ्रमेः इन्प्रत्ययः संप्रसारणं च भवति। रेफस्य स्थाने ऋकारो भवतीत्यर्थः। **भृमिः** भ्रमणम्। कृदिकारत्वादीकारोऽपि। भृमी। तथा च माघः "भृमी निमीलल[11]वणावैलम्बितैः इति"॥

---

१. C स्वसंगृहीतश्च.
२. C संगृ-
३. C करणम्.
४. C द्रव्यम्.
५. B ज्ञापना-
६. B omits तिथेः तिथिः.
७. B omits वा.
८. B omits च.
९. B धातुकोर्था-
१०. B स्थिर.
११. B -ध्रवना-

## ॥ ५५७ ॥ क्रमिगमिनमि[1]तमिस्तम्भामच इश्च[2] ॥ ४—१३१ ॥

"क्रमु पादविक्षेपे" "गमॢ गतौ" "णमु प्रह्वत्वे" "तमु ग्लाने" "स्तम्भुः" सौत्रः। एषामचः स्थाने इकारादेशः इन्प्रत्ययश्च। क्रामतीति [3]**क्रिमिः** कीटविशेषः॥ **गिमिः**[4]॥ **निमिः** ऋषिविशेषः॥ **तिमिः** मत्स्यविशेषः॥ तथा च महाभारते—

"अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः[5]।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति सागरे" ॥ इति ॥

**स्तिभिः** समुद्रः। किदित्यनुवृत्तेः नलोपः। अत एवान्येषां गुणाभावः; इकारादेशविधानसामर्थ्याद्वा[6] ॥

---

## ॥ ५५८ ॥ मनेरुच्च[7] ॥ ४—१३२ ॥

"मन ज्ञाने" अस्मादिन्प्रत्ययः। अच उकारः। सर्वं मन्यत इति **मुनिः** ऋषिविशेषः। तथा च "मननान्मुनिः" इति नैरुक्ताः॥

---

## ॥ ५५९ ॥ वलेर्बल[8] चाहिरण्ये ॥ ४—१३३ ॥

"वल वल्ल संवरणे" अस्मादिन्प्रत्ययः। बल इत्ययमादेशः [9]अहिरण्ये वाच्ये। **बलिः** राजा[10]। अहिरण्य इति किम्? वलिः[11] ॥

---

## ॥ ५६० ॥ वसिवपियजिराजिव्रजि[12]सदिहनि- वाशिवादिवारि[13]भ्य इञ् ॥ ४—१३४ ॥

---

१. B omits -नमि-
२. C omits च.
३. B. कृमिः.
४. B omits गिमिः
५. B -यतम्.
६. B adds नन्द्यः.
७. C -रुच.
८. B वलेर्वलश्च ॥
९. B हिरण्ये.
१०. B omits राजा.
११. B वल्लिः.
१२. B-स्राजि-
१३. C omits -वारि-

"वस निवासे" "डु वप् बीजसन्ताने" "यज" देवपूजादौ[1]। "राजृ दीप्तौ" "[2]भ्रज गतौ" हेतुमण्ण्यन्तैः[3]। "ध्वज गतौ" "षद्लृ विशरणे[4]" "हन हिंसागत्योः[4]" "वाशृ शब्दे" "वद व्यक्तायां वाचि" ण्यन्तः[5]। "वृञ् वरणे" ण्यन्तः[6]। एभ्य इञ्प्रत्ययो भवति[7]। वासी तक्षण साधनम्। कृदिकारत्वादीकारः। तथा च भाष्ये प्रयोगः "वासी वृत्योदन-हस्तः" इति॥ उप्यन्ते[9] निधीयन्ते जलान्यस्यामिति **वापिः**[10] जलाशय-विशेषः॥ **याजिः** याजकः॥ **राजिः** पङ्क्तिः॥ **भ्राजिः**[11] पातालम्॥ **ध्वाजिः**॥

"**सादिः** स्मृतो हयारोहः सादी सारथिरिष्यते।"

सेवकश्च॥ हन्यतेऽनेनेति **घातिः** प्रहरणम्॥ वाश्यत इति **वाशिः** अग्निः॥ वादयतीति **वादिः** वावदूकः[12]॥ [13]वारयतीति **वारि** जलम्॥

---

## ॥ ५६१ ॥ [14]नहो नभ च ॥ ४—१३५ ॥

"णह बन्धने" अस्मादिञ्प्रत्ययः। नभ इत्ययमादेशः। नह्यतीति **नाभिः** अङ्गविशेषः क्षत्त्रियविशेषश्च॥

---

## ॥ ५६२ ॥ कृषेर्वृद्धिश्छन्दसि ॥ ४—१३६ ॥

कृषेरिञ्प्रत्ययः। वृद्धिश्छन्दसि विषये भवति। **कार्षिः** शशी समुद्रश्च॥

---

## ॥ ५६३ ॥ अश्शकुनौ ॥ ४—१३७ ॥

---

१. C omits meanings.
२. B "सृ गतौ"
३. C omits हेतु........न्तः.
४. C omits meanings.
५. C omits ण्यन्तः.
६. B omits ण्यन्तः.
७. C omits भवति.
८. B -स्तात्.
९. B उप्यते निधीयते.
१०. C वापी.
११. B omits भ्राजिः.
१२. C adds वाग्विशेषश्च.
१३. C omits वार........जलम्.
१४. C omits this sūtra and commentary.

शृणातेरिञ्प्रत्ययः शकुनावभिधेये। **शारिः** शकुनिविशेषः[1]। शकुनिग्रहणमनर्थकं संज्ञाधिकारादेव लब्धत्वात्। तथा चोक्तम्—

"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥" इति॥

---

## ॥ ५६४ ॥ कृञ उदीचां कारुषु[2] ॥ ४—१३८ ॥

[3]कृञ इञ्प्रत्ययः उदीचां मतेन। **कारिः** तन्तुवार्यः[4]॥

---

## ॥ ५६५ ॥ जनिघसिभ्यामिण् ॥ ४—१३९ ॥

"जनी प्रादुर्भावे" "घसॢ अदने" आभ्यामिण्प्रत्ययः। जायतेऽस्यां गर्भ इति **जनिः**[5] अभिनवपाणिग्रहणा। "जनिवध्योश्च" इति वृद्धिप्रतिषेधः। "इणजादिभ्यः" इति इण्प्रत्ययेऽपि जनिः। स तु क्रियायां[6] वर्तते, यस्यायं प्रयोगः "लीला यस्य जगज्जनिस्थितिलयाः" इति॥ अत्तीति **घासिः** अग्निः। कर्मणि घासिः अन्नं च॥

---

## ॥ ५६६ ॥ अज्यतिभ्यां च ॥ ४—१४० ॥

"अज गतिक्षेपणयोः" "अत सातत्यगमने" आभ्यामिण्प्रत्ययः। अजति गच्छति युद्धार्थं यस्मिन्निति **आजिः** युद्धम्॥ **आतिः** स्वर्गः॥

---

## ॥ ५६७ ॥ पादे च ॥ ४—१४१ ॥

पादे चोपपदे अज्यतिभ्यामिण्प्रत्ययो भवति। "पादस्य पदाज्याति" इति पदादेशः। पादाभ्यामजतीति **पदाजिः पदातिः** पत्काषी॥

---

१. C विशेषणं.
२. B omits कारुषु.
३. B omits कृञ इञ्प्रत्ययः.
४. B -वायादिः.
५. B जानिः.
६. B क्रियामात्रे.

## ॥ ५६८ ॥ अशिपाणिभ्यां रुड्लुकौ च ॥ ४—१४२ ॥

"अशू व्याप्तौ" "पण व्यवहारे" ण्यन्तः । आभ्यामिण्प्रत्ययः, यथासंख्यं रुट्लुक् इत्येतौ भवतः । अश्नुत इति **राशिः** समूहः ॥ पण्यतेऽनेनेति **पाणिः** विस्तारिताङ्गुलिः । णेर्लुकि इण्प्रत्ययाश्रिता वृद्धिः । [1]अथ किमर्थं णिलुग्वचनं यावता णिलोपेनैव सिद्धम्? न च—णिलोपे प्रत्ययलक्षणेन वृद्धिः [[2]लुकि] "न लुमताङ्गस्य" इति वृद्धिर्न भवतीति विशेषः यस्माल्लुक्यपि इण्प्रत्ययाश्रिता [3]वृद्धिर्भवति । न च "अचः परस्मिन्पूर्वविधौ" इति स्थानिवद्भावः । "क्विलुगुपधात्वचङ्परनिर्ह्रसह्रस्वकुत्वेषु" इति निषेधादपरनिमित्तत्वाच्च । अतो नास्ति[4] विशेषो लुग्लोपयोः । एवं तर्हि विस्पष्टार्थं लुग्वचनम् ॥

अन्ये "अशिपणाय्यो रुड्लुकौ च" इति पठन्ति । तस्मिन्यद्य-[5]प्यायप्रत्ययान्तस्य लुगुच्यते तथापि प्रत्ययादर्शनस्यैव [[6]लुक्त्वात् प्रत्ययस्यैव] लु[7]ग्भविष्यति । अशेः[8] पूर्वं रुडागमः ॥

---

## ॥ ५६९ ॥ वेञो डित् ॥ ४—१४३ ॥

वेञ इण्प्रत्ययो डिद्भवति । डित्वविधानसामर्थ्यादभस्यापि टिलोपः । वयति गच्छतीति **विः** पक्षी ॥

---

## ॥ ५७० ॥ प्रे भरतेः कूपे ॥ ४—१४४ ॥

डिदित्येव । [9]प्रशब्द उपपदे भृञ इण्प्रत्य[10]यः डित् भवति कूपेऽभिधेये । बिभर्ति जलमिति **प्रभिः** कूपः । कूपग्रहणमनर्थकम्, संज्ञानुवर्तनात् ॥

---

१. C अथ किंणिलोपेन सिद्धम्?
२. The words within brackets are omitted in B and C.
३. B विधिः.
४. B इति विशेषे.
५. B अद्यप्रत्ययान्तस्य.
६. The words within brackets are omitted in B and C
७. C adds हि.
८. B शेषं.
९. B प्र उपपदे.
१०. C omits प्रत्ययः.

## ॥ ५७१ ॥ नौ व्यो यलोपः पूर्वपदस्य च दीर्घः ॥ ४—१४५ ॥

निशब्द उपपदे "व्येञ् संवरणे" अस्मादिण् डिद्भवति । निशब्दस्य च दीर्घः । नितरां वीयत इति नीविः विन्यास[1]विशेषेण परिहितं वस्त्रम्[2] ॥

---

## ॥ ५७२ ॥ समाने ख्यस्स चोदात्तः[3] ॥ ४—१४६ ॥

"ख्या प्रकथने" चक्षिङादेशो वा । अस्मात् समानशब्द उपपदे इणु-प्रत्ययो डिद्भवति । स च[4] समानशब्द उदात्तो भवति । "गतिकारकोपपदात्" इति उत्तरपदप्रकृतिस्वरापवादः[5] । समानं ख्यातीति सखा सखायौ सखायः । समानस्येति योगविभागेन समानस्य सादेश इति कैश्चिदभ्यधायि ; तद्भाष्यकारेणानु-[6]पगमादनादरणीयम् । भाष्यकारप्रयोगात् साधुत्वं तावदस्यासन्दिग्धम् । तथा च भाष्यं पस्पशायां प्रयोजनवर्णनसमये[7]

"सक्तुमिव तितउना पुनन्तो यत्र[8] धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते" ॥

इत्यस्यामृचि[9] अत्रा सखायस्सख्यानीत्यंशस्यार्थकथनप्रसङ्गेन "समानख्यातयः सखायः" इति । समानख्यातय इत्यस्यायमर्थः—सर्वं खल्विदं शब्द-ब्रह्मेति ऐक्येन प्रतिपद्यमाना इति । अतो भाष्यकारप्रयोगात् समानस्य सभावश्च[10] ॥

---

1. B नीव्यास-
2. B वधूम्-
3. B omits चोदात्तः........प्रत्ययो डित्.
4. B omits स च स-
5. B -स्वरत्र प्रकृति-
6. B भाष्यकारानुप-
7. B वर्णनविषये.
8. B omits यत्र........जानते.
9. C omits इति........नित्यंश-
10. B omits च.

## ॥ ५७३ ॥ आङि श्रिहनिभ्यां ह्रस्वश्च ॥ ४—१४७ ॥

"श्रिञ् सेवायाम्" "हन हिंसागत्योः" आङ्युपपदे श्रिहनिभ्यां इण्प्रत्ययो डित् भवति, आङो ह्रस्वश्च । "उदात्तः" इत्यधिकारात् आङः उदात्तत्वं च । आ श्रयतीति अश्रिः कोटिः ॥ आ हन्तीति अहिः । अहि-शब्दः आद्युदात्तो वेदे पठ्यते । "अहिरन्तोदात्तः" इति वृत्तिकारवचनमाद्य-न्नात्यभिप्रायेण [?] ॥

---

## ॥ ५७४ ॥ अच इः ॥ ४—१४८ ॥

अजन्ताद्धातोरिप्रत्ययो भवति । कविः पण्डितः ॥ रविः आदित्यः ॥ स्तविः स्तोत्रम् ॥ तरिः । कृदिकारादीकारः । तरी नौः । "तरीषु तत्रत्य-मफल्गु" इति माघः ॥ पविः ॥ लविः ॥ यविः ॥ हविः ॥

---

## ॥ ५७५ ॥ खनिकष्यञ्ज्यसिवसिध्वनि[वनि]सनिग्रन्थि-चरिभ्यश्च ॥ ४—१४९ ॥

---

### आङि श्रिहनिभ्यां ह्रस्वश्च ॥

"श्रिञ् सेवायाम्" "हन हिंसागत्योः" आङि उपपदे श्रिहनिभ्यां इण्प्रत्ययो भवति डिच्च । अश्रिः धनुष्कोटिः ॥ अहिः व्यालः ॥

### अच इन् ॥

अजन्ताद्धातोरिन्प्रत्ययो भवति । कविः काव्यकर्ता ॥ "ष्टुञ् स्तुतौ" तविः उद्गाता ॥ "रु शब्दे" रविः आदित्यः ॥ "लूञ् छेदने" लविः दात्रम् ॥ "पूञ् पवने" पविः वायुः ॥ "तॄ प्लवनतरणयोः" तरिः नौः ॥

### खनिकस्यञ्जयसिवसिध्वनिवनिसनिग्रन्थिचरिभ्यश्च ॥

---

1. From here to the end of the work the mss. B and C present wide differences in the text and consequently both the texts have been printed; that which appears at the top is text as found in C and that found below is the one as found in B,

"खनु अवदारणे" कषिः हिंसार्थः । "अञ्जू" "असु" "वसु स्तम्भे" "ध्वन शब्दे" ["वेनु"] "षण" "ग्रन्थ सन्दर्भे" चरिः गत्यर्थः । एभ्यश्च इप्रत्ययः । "इन् सर्वधातुभ्यः" इति रूपे सिद्धे स्वरभेदात् प्रत्ययान्तर-विधानम् । खनति उत्पद्यतेऽस्यामिति **खनिः** आकरस्थानम् ॥ कषतीति **कषिः** वायुः ॥ अनक्ति गच्छतीति **अञ्जिः** ॥ अस्यत इति **असिः** खड्गः ॥ **वसिः** गृहम् ॥ **ध्वनिः** शब्दः ॥ [**वेनिः**] याच्ञा ॥ [**सनिः**] ग्रथ्यत इति **ग्रन्थिः** बन्धविशेषः ॥ चरतीति **चरिः** दावाग्निः ॥

---

**॥ ५७६ ॥ उभेः द्वि च ॥ ४—१५० ॥**

[द्विः[1]॥]

---

**॥ ५७७ ॥ वृतेश्छन्दसि ॥ ४—१५१ ॥**

वृतेः छन्दसि इप्रत्ययः । **वर्तिः** कर्मद्रव्यम् । छन्दसीति किम्? वर्तिः । स्वरकृतो विशेषः ॥

---

**॥ ५७८ ॥ भुजेः किच्च ॥ ४—१५२ ॥**

भुजेरिप्रत्ययः किद्भवति । **भुजिः** अग्नियजमानौ ॥

---

**"खनु अवदारणे" "कस गतौ" "अञ्जू व्यक्तिम्रक्षणगतिषु" "असु क्षेपणे" "वस निवासे" "स्यमु स्वन ध्वन शब्दे" "वन षण संभक्तौ" "श्रन्थ ग्रन्थ सन्दर्भे" "अभ्र मभ्र चर गत्यर्थाः" एभ्य इन्प्रत्ययः । खनिः द्रव्यक्षेत्रनाम ॥ कसिः काष्ठम् कर्मद्रव्यं च ॥ अञ्जिः प्रेषयिकम् [?] ॥ असिः खड्गः ॥ [वसिः[1]] ॥ क्ष(?)णः अग्निः ॥ [?] ध्वनिः शब्दः ॥ [[1]वनिः] अग्निः याच्ञा ॥ सनिः नदीकूलम् ॥ ग्रन्थिः श्वयथुर्नाम ॥ चरिः दवाग्निः ॥**

**वृतेश्छन्दसि ॥**

**छन्दसि विषये वर्तिः कर्मद्रव्यम् । छन्दसीति किम्? वर्तिः स्वरकृतो विशेषः ॥**

**भुजेः किच्च ॥**

**"भुज पालनाभ्यवहारयोः" भुजेरिन्प्रत्ययः । भुजिः अग्निः ॥**

---

1. The words within brackets are omitted in the original.

॥ ५७९ ॥ कॄगॄशॄपॄतॄकुटिभिदिछिदिभ्यश्च ॥ ४—१५३ ॥

"कॄ विक्षेपे" "गॄ निगरणे" "शॄ हिंसायाम्" "पॄ पालनपूरणयोः" "तॄ छादन[प्लवन]तरणयोः" "कुट कौटिल्ये" "भिदिर् विदारणे" "छिदिर् द्वैधीकरणे" एभ्य इप्रत्ययः किद्भवति। कित्त्वात् गुणप्रतिषेधः। "ऋत इद्धातोः" "उरण् रपरः" इति रपरत्वम्। किरतीति **किरिः** वराहः॥ **गिरिः** प्रसिद्धः॥ **शिरिः**॥ **पुरिः** नगरी ॥ **तरिः** राजा॥ **कुटिः** गृहम्॥ **भिदिः** वज्रम्॥ **छिदिः** परशुः कालश्च॥

॥ ५८० ॥ कुण्ठिकम्प्योर्नलोपश्च ॥ ४—१५४ ॥

"कुठि च" चकारात् "अवगतिप्रतिघाते च" इति पूर्वं पठ्यते। "कपि चलने" आभ्यामिप्रत्ययः नलोपश्च। [**कुठिः** वृक्षः][1]॥ कम्पत इति **कपिः** वानरः॥

॥ ५८१ ॥ मनिन् ॥ ४—१५५ ॥

---

कॄगॄशॄपॄकुटिभिदिछिन्दिभ्यश्च॥

"कॄ विक्षेपे" "गॄ निगरणे" "शॄ हिंसायाम्" "पॄ पालनपूरणयोः" "कुट कौटिल्ये" "भिदिर् विदारणे" "छिदिर् द्वैधीकरणे" एभ्य इन्प्रत्ययः किच्च। कित्त्वात् गुणप्रतिषेधः। "ऋत इद्धातोः" "उरण् रपरः" किरिः कालः॥ गिरिः पर्वतः॥ शिरिः खड्गः॥ पुरिः नगरी। "उदोष्ठ्यपूर्वस्य"॥ कुटिः वज्रः [?]॥ भिदिः वज्रम्॥ छिदिः परशुः कालश्च॥

कुण्ठिकम्प्योर्नलोपश्च॥

"कुठि आलस्ये" "कपि चलने" आभ्यामिन्प्रत्ययः नलोपश्च भवति। कुठिः दक्षी [वृक्षः]॥ कपिः वानरः॥

मनिन् सर्वधातुभ्यः॥

सर्वधातुभ्यो मनिन्प्रत्ययो भवति॥ "डु कृञ् करणे" कर्म शुभा-

---

1. The words within brackets are omitted in the original.

धातोः मनिन्प्रत्ययः यथायथं कालविशेषे । शृणातेः शर्म सुखम् ॥ क्रियत इति कर्म क्रिया ॥ भसितं तदिति भस्म ॥ चरितं तदिति चर्म ॥ "भूतेऽपि दृश्यन्ते" उणादयः । हिनोतेर्हेम स्वर्णम् ॥ भ्रियत इति भर्म सिद्धिः [?] । अर्तिस्तुसूत्रे भृञोऽपि प्रक्षेपात् केचित् भर्म इच्छन्ति । तथा "चर्म रुममम्" इति निघण्टुः ॥ जन्म जननम् ॥ वृत्तं तदिति वर्त्म पन्थाः ॥ श्लेषयतीति श्लेष्मा ॥

## ॥ ५८२ ॥ बृंहेरम् नलोपश्च ॥ ४—१५६ ॥

"बृहि वृद्धौ" अस्मान्मनिन्प्रत्ययः, धातोरमागमः, नलोपश्च भवति । बृंहतीति ब्रह्मा प्रजापतिः ॥

अपरे "बृंहेर्नोऽच्च" इति सूत्रं पठन्ति । तस्यायमर्थः "बृहि वृद्धौ" बृंहेर्मनिन्प्रत्ययः । नकारस्य अदादेशः ; इको यणादेशः ।

"बृहत्वात् बृंहणत्वाच्च भावानां सलिलाश्रयात् ।
यस्माद्धारयते सर्वान् ब्रह्मा तेन निरुच्यते ॥"

## ॥ ५८३ ॥ उषिकुषिहृषिभ्यः ॥ ४—१५७ ॥

एभ्यो मनिन्प्रत्ययः किद्भवति । उष्मा उष्णम् ॥ कु[कुष्य]त इति कुष्मा जरायुः ॥ हृष्मा गन्ता ॥

---

शुभम् ॥ "अभ्र मभ्र [[1]चर] गत्यर्थाः" [[1]चर्म] फलकम् ॥ "शॄ हिंसायां" शर्म सुखम् । "वृञ् वरणे" वर्म तनुत्रम् शरीरावरणम् ॥ "वृतु वर्तने" वर्त्म पन्थाः ॥ "भस भर्त्सनदीप्त्योः" भस्म भूतिः ॥ "श्लिष आलिङ्गने" श्लेष्मा धातुः ॥ "जनी प्रादुर्भावे" जन्म प्रादुर्भावः ॥

### बृंहेर्नोऽच्च ॥

"बृह बृहि वृद्धौ" बृंहेर्मनिन्प्रत्ययः । नकारस्य अकारदेशो भवति । यणादेशः । ब्रह्मा ।

"बृहत्त्वात् बृंहणत्वाच्च भावानां सलिलाश्रयात् ।
यस्माद्धारयते सर्वान् ब्रह्मा तेन निरुच्यते ॥"

---

1. The words within brackets are omitted in the original.

॥ ५८४ ॥ अशिशक्भ्यिां छन्दसि ॥ ४—१५८ ॥

"अश भोजने" "शक्लृ शक्तौ" अभ्यां मनिन्प्रत्ययः छन्दसि विषये। अश्मा शिलाशकलम् ॥ शक्मा शक्तः ॥

---

॥ ५८५ ॥ भृसृहृधृस्तृसूभ्य ईमनिन् ॥ ४—१५९ ॥

छन्दसीत्येव। भृसृहृधृस्तृसू इत्येतेभ्य ईमनिन्प्रत्ययो भवति छन्दसि विषये। बिभर्तीति भरीमा धवः ॥ सरीमा ॥ हरीमा ॥ धरीमा ॥ स्तरीमा ॥ सवीमा प्रसवः ॥

---

॥ ५८६ ॥ जनिहृभ्यामिमनिन् ॥ ४—१६० ॥

"जनी प्रादुर्भावे" "हृञ् हरणे" इत्येताभ्यां इमनिन्प्रत्ययो भवति छन्दसि विषये। जनिमा जन्म ॥ हरिमा मृत्युः अश्वश्चोरश्च ॥

---

**अशिशे[1]किभ्यां छन्दसि ॥**

**"अश भोजने" "शक्लृ शक्तौ" आभ्यां मनिन्प्रत्ययः छन्दसि विषये। अश्मा शिला ॥ [[2]शक्मा] तक्षा न [?] ॥**

**हृभृसृधृस्तृसूभ्य ईमनिच् ॥**

**"हृञ् हरणे" "भृञ् भरणे" ["सृ[2] गतौ"] "धृञ् धारणे" "स्तृञ् छादने" "षूङ् प्राणिगर्भविमोचने" एभ्य ईमनिच्प्रत्ययः छन्दसि विषये। हरीमा इन्द्रः ॥ भरीमा स्वामी कुटुम्बः कर्म च ॥ [[2]सरीमा ॥] धरीमा अधस्तपश्च ॥ स्तरीमा शयनम् वायुश्च ॥ सवीमा प्रसवः ॥**

**जनिहृभ्यामिमनिच्[3] ॥**

**"जनी प्रादुर्भावे" "हृञ् हरणे" आभ्यामिमनिच्प्रत्ययो भवति छन्दसि विषये। जनिमा जन्म सुखं च ॥ हरिमा अश्वः चोरः मृत्युश्च ॥**

---

१. The original reads अशिकशि-

२. The words within brackets are omitted in the original.

३. The original has इमनिन्.

॥ ५८७ ॥ वेञस्सर्वत्र ॥ ४—१६१ ॥

वेञः सर्वत्र छन्दसि भाषायां च इमनिन्प्रत्ययः । सर्वत्रग्रहणात् पूर्वसूत्रतोऽधिकार इति गम्यते । वेमा तन्तुवायद्रव्यम् ॥

---

॥ ५८८ ॥ नामन् सामन् सोमन् हेमन् रोमन् लोमन् व्योमन् विधर्मन् ध्यामन् पाप्मन् ॥ ४—१६२ ॥

नामन् इत्यादयो निपात्यन्ते । नयतेर्मनिन्, आकारश्चान्तादेशः । नीयते भूयतेऽनेनेति नाम संज्ञा ॥ "षो अन्तकर्मणि" अनेकार्थत्वाद् गाने वर्तते । सीयते गीयत इति साम वेदः ॥ सुनोतेः सोमन् सोमः । अकारान्तोऽपि ॥ हिनोतेः हेम सुवर्णम् ॥ रौतेर्मन् । रोमन् अङ्गजम् ॥ लूञो मन् । लोम तदेव ॥ व्येञो मनिन् । वीयते अनेनेति व्योमन् आकाशः । ओकारादेशो निपात्यते ॥ धाञो विपूर्वात् विधर्मन् सुनिहितम् ॥ ध्यायतेर्मन् । ध्यामन् ॥ पातेः पुक् । पाप्मा पापम् ॥ हिनोतेः

---

वेञस्सर्वत्र ॥

वेञः इमनिच्प्रत्ययः छन्दसि विषये । ऊयतेऽनेनेति वेमा तन्तुवायोपकरणम् ॥

नामन् सामन् सोमन् होमन् व्योमन् रोमन् लोमन् विधर्मन् व्योमन् [1] पाप्मन् ॥

एते शब्दा इमनिच्प्रत्ययान्ता निपात्यन्ते । "णमु प्रह्वत्वे" धातुमकारस्य च प्रत्ययेकारस्य च लोपो निपात्यते । धाताः दीर्घः च । नाम संज्ञा ॥ "स्यमु स्वन ध्वन शब्दे" धातोर्यकारलोपः, धात्वकारस्य [दीर्घः[2]] इमनिच्प्रत्ययेकारस्य च प्रत्ययो [लोपो] निपात्यते । साम प्रथमोपायः ॥ "षुञ् अभिषवे" प्रत्ययस्य इकारलोपो निपात्यते । सोम यज्ञद्रव्यम् ॥ "हु दानादानयोः" अत्रापि इकारलोपो निपात्यते । होम आहुतिः ॥ "अव रक्षणे" विपूर्वस्य ओकारो निपात्यते । प्रत्ययादिलोपश्च मे । व्योम आकाशम् ॥ "रुह बीजजन्मनि" रुहेर्हकारलोपो निपात्यते, प्रत्ययादिलोपश्च । रोहतीति रोम तनूरुहः ।

---

१. The sutra is repeated in the original.

२. The word within brackets is omitted in the original.

सुनोते रौतेर्लुनातेर्ध्यायतेर्मनिन्निन्नित्यनेनैव हेमन्नित्यादि च रूपाणि सिद्धानि। तेन निपातनं प्रपञ्चार्थम् ॥

॥ ५८९ ॥ मिथुने मनिन् ॥ ४—१६३ ॥

मिथुने स्त्रियां पुंसि च गम्यमाने सर्वधातुभ्यो मनिन्प्रत्ययः। धर्माधर्म [?] इत्यादि ॥

॥ ५९० ॥ सातिभ्यां मनिन्मनिणौ ॥ ४—१६४ ॥

स्यतेः "अत सातत्यगमने" अस्माच्च यथासंख्यं मनिन् मनिण् इत्येतौ प्रत्ययौ भवतः पुंस्येव बाहुलकात्। सामा कालः ॥ आत्मा शरीरान्तर्गतः ॥

॥ ५९१ ॥ ष्ट्रन् ॥ ४—१६५ ॥

धातोः ष्ट्रन्प्रत्ययो भवति। षकारो ङीषर्थः। नकारः स्वरार्थः।

---

"रुहे रुचेश्च रौतेश्च रुदिरुध्यां रुषेरपि।
षण्णामेव च धातूनां रोमशब्दं निपातयेत्॥"

"लूञ् छेदने" प्रत्ययादिलोपो निपात्यते [लोमन्] ॥ "लुप छेदने" लुनिपात्यते [?] विधर्मा सुनिहितम् ॥ "व्येञ् संवरणे" इमनिच्प्रत्ययः [?] ॥ पाधातोः पुगागमः। प्रत्ययादिलोपश्च निपात्यते। पाप्मा अलक्ष्मीः ॥

मिथुने मनिन् ॥

मिथुने गम्यमाने मनिन्प्रत्ययः। मिथुने स्त्रीपुरुषयोरित्यर्थः ॥ "शॄ हिंसायाम्" सुशर्मा ब्राह्मणः ब्राह्मणी च। सुशर्मा क्षत्त्रियः क्षत्त्रिया च ॥

सातिभ्यां मनिन्मनिणौ[1] ॥

"षो अन्तकर्मणि" "अत सातत्यगमने" आभ्यां मनिन् [2]मनिण् इत्येतौ प्रत्ययौ भवतः। सामा कालः ॥ अतति शरीरान्तरमिति आत्मा अन्तः पुरुषः ॥

ष्ट्रन् ॥

ष्ट्रन्प्रत्ययः सर्वधातुभ्यः। "छद अपवारणे" छादिञ इति स्थिते

---

1. The original has मनिनौ.

2. The original has मन्.

"छद अपवारणे" चौरादिकः। छाद्यतेऽनेनेति छत्रम्। छादेः ष्ट्रन्। "इस्मन्त्रन्क्विषु च" इति ह्रस्वत्वम्। "तितुत्र" इति इट्प्रतिषेधः। छत्रमातपवारणम्। छत्रमिव, छत्रम् आतपं निवारयति तद्वत्, गुरोश्छिद्राणि पिदधातीति तच्छीलः छात्रः॥ पतेः पत्रं वाहनम्। दाम्न्यादिसूत्रेणापि सिद्धम् पत्रम्॥ "वस आच्छादने" वस्यते आच्छाद्यतेऽनेनेति वस्त्रं वासः॥ तनोतेः ष्ट्रन्। दैर्घ्येण तन्यन्त इति तन्त्राणि। तत्साधर्म्यात् छत्रा[शास्त्रा]ण्यपि तन्त्राणि॥ राजेः राष्ट्रम् जनपदः॥ पिबतेः पात्रम् पीयतेऽनेनेति। ङीषि कृत्वा[ते] पात्री॥ नयतेः नेत्रम्। दाम्न्यादावपि नेत्रसिद्धिः। ष्ट्रन्प्रत्ययान्तं क्वचिदन्तोदात्तं स्वरव्यत्ययस्याभ्युपगमात्॥

---

## ॥ ५९२ ॥ भ्रस्जिगमिनमिहनिविष्यशां वृद्धिश्च ॥ ४—१६६ ॥

"भ्रस्ज पाके" "गमॢ" "णमु" "हन" "विषॢ" "अशू" ष्ट्रन्प्रत्ययसन्नियोगेनैषामचः स्थाने वृद्धिर्भवति। वृद्ध्यर्थमिदं प्रत्ययस्य सिद्धत्वात्। भृज्ज्यतेऽस्मिन्निति भ्राष्ट्रः अम्बरीषम्॥ गान्त्रं मन्त्रम्॥ रमणीयं नम्यते

---

"छादेर्घेऽद्व्युपसर्गस्य" "इस्मन्त्रन्क्विषु च" इति ह्रस्वः उपधायाः। "खरि च" इति चर्त्वम्। छत्रम् आतपत्रम्॥ "पतॢ गतौ" पत्रं पर्णम्॥ "वस आच्छादने" वस्त्रं वासः॥ "तनु विस्तारे" तन्त्रं विस्तारः॥ "राजृ शब्दे" व्रश्चादिसूत्रेण षत्वम्। राष्ट्रं विषयः॥ "शासु अनुशिष्टौ" शास्त्रं शासनम्॥ "पा पाने" पात्रं गुणवान्॥

भ्रस्जिगमिनमिहनिविष्यशां वृद्धिश्च॥

"भ्रस्ज पाके" "गमॢ सृपॢ गतौ" "णमु प्रह्वत्वे" "हन हिंसागत्योः" "विषॢ व्याप्तौ" "अश भोजने" एभ्यः ष्ट्रन्प्रत्ययो वृद्धिश्च। सकारस्य "स्कोः संयोगाद्योरन्ते च" इति लोपः। इकारश्च[जकारस्य] व्रश्चादिना सूत्रेण षत्वम्। "ष्टुना ष्टुः" इति ष्टुत्वम्। भ्राष्ट्रं अम्बरीषम्॥

---

१. The original reads -विश्य-

२. The original reads -विश्य-

विविधमनेनेति नान्त्रम् वैचित्र्यम् ॥ [हान्त्रम् ॥] वैष्ट्रम् त्रिदिवम् ॥ आष्ट्रम् आकाशम् । सेटां सर्वत्र "तितुत्र" इति इट्प्रतिषेधः ॥

॥ ५९३ ॥ दिवेर्द्युश्च ॥ ४—१६७ ॥

वृद्धिरित्येव । दिवेः ष्ट्रन्, द्युरित्यादेशो धातोः । द्यौत्रं ज्योतिः ॥

॥ ५९४ ॥ उषिखनिभ्यां कित् ॥ ४—१६८ ॥

"उष दाहे" "खनु अवदारणे" आभ्यां ष्ट्रन्प्रत्ययः किद्भवति । उष्ट्रः शृङ्खलकः ॥ खन्यतेऽनेनेति खात्रं खननसाधनम् । "जनसनखनाम्" इत्यात्वम् ॥

॥ ५९५ ॥ सिविमुच्योष्टेरू च ॥ ४—१६९ ॥

सिविमुच्योः ष्ट्रन्प्रत्ययः टेः स्थाने ऊकारादेशश्च । सूत्रं तन्तुः ॥ मूत्रं प्रस्रावः ॥ ननु च "सूत्र प्रस्रवणे [वेष्टने]" "मूत्र अवमोचने [प्रस्रवणे]"

---

गान्त्री कंबलवाह्यकं प्रहर[प्रवह]णमित्यर्थः। "षिद्गौरादिभ्यश्च" इति ङीष् ॥ नान्त्रं वैचित्र्यम् ॥ हान्त्रं मारणम् ॥ वैष्ट्रम् त्रिदिवम् ॥ आष्ट्रम् आकाशम् ॥

दिवेर्द्यु च ॥

"दिवु" क्रीडादिषु । ष्ट्रन्प्रत्ययः, द्यु इत्ययं चादेशः, वृद्धिश्च धातोः । द्यौत्रं ज्योतिः ॥

उषिखनिभ्यां कित् ॥

"उष दाहे" "खनु अवदारणे" आभ्यां ष्ट्रन्प्रत्ययः किच्च । उष्ट्रः पशुविशेषः ॥ खन् त्र इति स्थिते "विड्वनोरनुनासिक" इत्यधिकृत्य "जनसनखनाम्" इत्याकारः । खात्रं लेखोपकरणम् ॥ "षिद्गौरादिभ्यश्च" इति ङीष् । उष्ट्री ॥

षिवुमुच्योष्टेरू च ॥

"षिवु तन्तुसन्ताने" "मुच्लृ मोक्षणे" आभ्यां ष्ट्रन्प्रत्ययः, टेश्चानयोरू इत्ययं चादेशः । सूत्रं तन्तुः ॥ मूत्रम् प्रस्रावः ॥

---

1. The words within brackets is omitted in the ms.

चौरादिकौ। आभ्यां घञि सूत्रमूत्रसिद्धिः, यदि ताभ्यां घञ् लभ्येत । स तु न लभ्यः एरचा बाधितत्वात् । "एरजण्यन्तानाम्" इति वचनमनित्यमित्युक्तम् ॥

---

## ॥ ५९६ ॥ हुयामाश्रुभसिभ्यस्त्रन् ॥ ४—१७० ॥

"हु दानादानयोः" "या" "मा" "श्रु" "भस भर्त्सनदीप्त्योः" एभ्यस्त्रन्प्रत्ययो भवति । प्रत्ययान्तरकरणं स्त्रियां विशेषात् । हूयत इति होत्रं आहुतिः । हूयतेऽस्मिन्निति वा होत्रम् ज्योतिरुच्यते ॥ यात्रा प्रस्थानम् ॥ मीयतेऽनेनेति मात्रा परिमाणविशेषः ॥ श्रूयतेऽनेनेति श्रोत्रं श्रुतिः ॥ भस्यतेऽनेनेति भस्त्रा चर्ममयम् ॥

---

## ॥ ५९७ ॥ गमेरा च ॥ ४—१७१ ॥

गमेस्त्रन्प्रत्ययः, आकारश्चान्तादेशः । गम्यतेऽनेनेति गात्रं शरीरम् ॥

---

## ॥ ५९८ ॥ अमिचिमिदिशंसिभ्यः कित् ॥ ४—१७२ ॥

"अम गतिभक्तिशब्देषु" "चिञ्" "ञि मिदा स्नेहने" "शंसु स्तुतौ" एभ्यस्त्रन् किद्वत् भवति । अम्यतेऽनेनेति अन्त्रं

---

### हुयामाश्रुभसिभ्यस्त्रन् ॥

**"हु दानादानयोः" "या प्रापणे" "माङ् माने" "श्रु श्रवणे" "भस भर्त्सनदीप्त्योः" एभ्यस्त्रन्प्रत्ययः । होत्रं आहुतिकरणम् ॥ यात्रा गमनक्रिया ॥ मात्रा परिच्छदे पञ्च[अल्प]परिमाणं च ॥ श्रोत्रम्[1] ॥ भस्त्रा[2] ॥**

### [3][गमेरा च ॥]

**गात्रं शरीरम् ॥**

### अमिचिमिदिशंसिभ्यः क्त्रः ॥

**"अम रोगे" "चिञ् चयने" "ञि मिदा स्नेहने" "शंसु स्तुतौ"**

---

1. The original reads सूत्रम्.
2. The original reads धात्रो.
3. The words within brackets are omitted in the original.

पुरीतत् । " त्वदेलग्नामन्त्रामालामिति " माघः । आन्त्रमिति छान्दसो दीर्घः ॥ चीयतेऽनेनेति चित्रम् अद्भुतम् ॥ मेद्यतीति मित्रम् [सुहृत्] आदित्यश्च ॥ शस्यतेऽनेनेति शस्त्रं साम[स्तोत्र]विशेषः ॥

॥ ५९९ ॥ पुवो ह्रस्वश्च ॥ ४—१७३ ॥

पूङ्पूञोः सामान्यग्रहणम् । पुवस्त्रन्प्रत्ययः ह्रस्वश्च । पूयतेऽनेनेति पुत्रः सूनुः । 'पुन्नाम्नो नरकात् त्रायते इति पुत्रः' इति नैरुक्ताः । अस्मिन्पक्षे अवग्रहेऽदोषः । अथ वा लक्षणकारैः पदकारा नानुवर्त्या इति दोषाभावः ॥

॥ ६०० ॥ स्त्री ॥ ४—१७४ ॥

स्त्री इति निपात्यते । " स्त्यै ष्ट्यै सङ्घातशब्दयोः " अस्मात् ड्रट्प्रत्ययो निपात्यते । टित्वात् ङीप् । " स्त्यायत्यस्यां गर्भः " इति । भाष्यकारदर्शने भावसाधना स्त्री । सङ्घातभावमुपगच्छतीति स्त्री । " स्तृञ् छादने " ष्ट्रन्[ड्रट्]प्रत्ययः । छादयति तिरोभवतीति स्त्री । पूर्वस्मिन् दर्शने स्त्रीसूत्रे भाष्यम् " संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान् " इति । अस्य टीका—भावसाधनत्वं दर्शयति—संस्त्यान इति ॥ गुणानां तिरोभावः ॥ स्त्री सूतेः इति ॥ सू इत्यस्य धातोः [सप्]भवति सकारस्य पकारो भवतीत्यर्थः । औणादिकः स[म्सिच्]प्रत्ययः ह्रस्वश्च बाहुलकात् ॥ प्रसवेति ॥

---

पचयः क्त्रप्रत्ययः । आन्त्रम् कोष्ठावयवः ॥ चित्रम् आलेख्यम् ॥ मित्रम् सुहृत् ॥ शस्त्रम् खड्गम् [स्तोत्रम्] । " अनिदिताम् " इति नलोपः ॥

पुवः संज्ञायां ह्रस्वश्च ॥

पुवः क्त्रप्रत्ययः संज्ञायां धातोः । पुनाति मातापितराविति पुत्रः ॥

स्त्री[2] ॥

स्त्री इत्ययं शब्दः क्त्र[ड्रट्]प्रत्ययान्तो निपात्यते । " स्तृञ् छादने " " ष्ठा गतिनिवृत्तौ " क्त्रप्रत्ययः । टिलोपः । ककारथकारयोश्च लोपः । अनया कुलं स्थानं वा गुणानां स्तूयते वा नौ प्रयोजनार्थं स्त्री योषित्[?] ॥

---

१. The words within brackets are omitted in the ms.

२. The original reads ष्ट्री.

## ॥ ६०१ ॥ गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रन् ॥ ४—१७५ ॥

"गु पुरीषोत्सर्गे" "गुङ् शब्दे" वा "धृङ् अवस्थाने" "वी गतिप्रजनकान्त्यसनखादनेषु" "डु पचष् पाके" "वच परिभाषणे" "यम उपरमे" "षद" "क्षदिः" सौत्रः। एभ्यस्त्रन्प्रत्ययः। गूयतेऽनेनेति गोत्रं नाम ॥ ध्रियतेऽस्मिन्निति धर्त्रं गृहम् ॥ वेत्रं लताविशेषः ॥ पचतीति पक्त्रं गार्हपत्यम् ॥ उच्यतेऽनेनेति वक्त्रं लपनम् ॥ यन्त्रं उपकरणम् ॥ सत्रं पुण्यक्रिया ॥ क्षत्रं राजन्यः। 'क्षतात् त्रायते' इति नैरुक्ताः ॥

---

## ॥ ६०२ ॥ दादिभ्यः छन्दसि ॥ ४—१७६ ॥

दाप्रभृतिभ्यो धातुभ्यः छन्दसि विषये त्रन्प्रत्ययः। "दाप् लवने" दात्रम् ॥ यौतेः योत्रम् ॥ पुनातेः पोत्रम् मुखम् ॥ "क्षि निवासगत्योः" क्षेत्रम् ॥ बाहुलकात् भाषायामपि ॥

---

गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रन् ॥

"गु अव्यक्ते शब्दे" "धृञ् धारणे" "वी गतिप्रजनकान्त्यसनखादनेषु" "डु पचष् पाके" "वच परिभाषणे" "यम उपरमे" "षद्लृ विशरणगत्यवसादनेषु" "क्षद्" इति सौत्रो धातुः। एभ्यस्त्रन्प्रत्ययः भवति। गोत्रं वंशनाम ॥ धर्त्रम् गृहं ॥ वेत्रम् लतापत्रम् ॥ [[1]पक्त्रम् ॥] गार्हपत्यम् ॥ वक्त्रं मुखम् ॥ यन्त्रं उपकरणभाण्डं दीर्घयन्त्रम् [?] ॥ सत्रं क्रतुविशेष उच्यते ॥ क्षत्रं वर्णविभागः ॥

दादिभ्यः छन्दसि ॥

"दाप् लवने" "यु मिश्रणे" "पा पाने" [दात्रम् ॥] यात्रं मिश्रीभावः ॥ [पात्रम्[1] ॥] क्षेत्रम् केदारः ॥

---

1. The words within brackets are omitted in the ms.

॥ ६०३ ॥ भूवदिगृभ्यो णित्रन् ॥ ४—१७७ ॥

भूवदिगृभ्यः णित्रन्प्रत्ययो भवति । णकारो वृद्ध्यर्थः । नकारः स्वरार्थः । भावित्रं त्रैलोक्यम् ॥ वाद्यतेऽनेनेति वादित्रम् वाद्यविशेषः ॥ गारित्रः आचार्यः ॥ अपरे "भू सत्तायाम्" वादिर्ण्यन्तः । बहुवचननिर्देशात् गिरतिरपि गृह्यत इति वर्णयन्ति ॥

॥ ६०४ ॥ चरेर्वृत्ते ॥ ४—१७८ ॥

चरेः वृत्तेऽभिधेये णित्रन्प्रत्ययः । चारित्रम् । अश्यादित्वादित्र-प्रत्ययोऽपि । चरित्रम् । यदि वा "अर्तिलूधूसू" इत्यादिना इत्रः ॥

॥ ६०५ ॥ अशित्रादिभ्य इत्रोत्रौ ॥ ४—१७९ ॥

अश्यादिभ्यस्त्रादिभ्यश्च यथासंख्यं इत्र उत्र इत्येतौ प्रत्ययौ भवतः । अश्यत इति अशित्रं चरुः ॥ कन्दित्रं जघनम् ॥ बन्धित्रः मम [मन्मथः] ॥ वहित्रं वाहनम् ॥ पवित्रं शोधनम् ॥ त्रोत्रम् पालनम् ॥ "ला आदाने" [1]लोत्रं अपहृतद्रव्यम् ॥ पोत्रं संवरणम् ॥

---

भूवादिगृभ्यो णित्रन् ॥

"भू सत्तायाम्" "वद व्यक्तायां वाचि" हेतुमण्णिच् । वादि "णेरनिटि" इति णिलोपः । प्रत्ययलक्षणेन वृद्धिः । "गॄ निगरणे" एभ्यो णित्रन्-प्रत्ययः । भावित्रं त्रैलोक्यम् ॥ वादित्रं तूर्यम् ॥ गारित्रः आचार्यः ॥

चरेर्वृत्ते ॥

"अञ्च मञ्च चर गत्यर्थाः" चरेर्णित्रन् प्रत्ययः वृत्ते गम्यमाने । चारित्रम् कुलवृद्धिः । वृत्त इति किमर्थम्? चरित्रं वर्तनम् ॥

अशित्रादिभ्य इत्रोत्रौ ॥

"अश भोजने" "कटे वर्षावरणयोः" "वह प्रापणे" "बन्ध बन्धने" "खनु अवदारणे" "ऋ गतौ" "त्रैङ् पालने" "ला आदाने" अशादिभ्यः त्रादिभ्यश्च यथासंख्यं इत्र उत्र इत्येतौ प्रत्ययौ भवतः ॥ अशित्रं चरुः अन्नम् च ॥ कटित्रं चर्म सक्थनम् ॥ वहित्रं यानम् ॥ बन्धित्रं मथः ॥

---

1. The ms. adds भूतेवत्र.

॥ ६०६ ॥ अमेर्द्विषति चित् ॥ ४—१८० ॥

"अम" गत्यादिषु। अमेरित्रप्रत्ययः। स्वरितत्वादित्रप्रत्ययः केवलोऽनुवर्तते। द्विषति अभिधेये स चित् भवति। तेन अमित्र इत्यन्तोदात्तम् पदम्। अमतीति अमित्रः शत्रुः॥

॥ ६०७ ॥ आ समिण्निकषिभ्याम् ॥ ४—१८१ ॥

संपूर्वादिणः, निपूर्वात् कषेश्च आप्रत्ययः। समया निकषा समीपवचने अव्यये। पूर्वं प्रत्ययनिर्देशादन्यतोऽपि भवति। मृष्यते मृषा॥ सनतेः सना पुराणे॥ मुचेः मुधा॥ स्वदेः स्वधा। पृषोदरादित्वाद्धकारः।

॥ ६०८ ॥ सूचेः क्स्मन् ॥ ४—१८२ ॥

"सूच पैशुन्ये" अस्मात् क्स्मन्। ककारः कित्कार्यार्थः। नकारः स्वरार्थः। सूचयतीति सूक्ष्मं तनुः॥

॥ ६०९ ॥ पातेर्डुंसिच् ॥ ४—१८३ ॥

---

खनित्रम् खननद्रव्यम्॥ अरित्रं नौवाहनम्॥ त्रोत्रम्॥ लोत्रम् अपहृतद्रव्यं॥ धात्रम् मरणम् [?]। अन्ये त्रादिभ्यः। तरति तेन तरित्रं उत्तबः वरूत्रूसत्राह [?]॥

अमेर्द्विषति चित्॥

"अम रोगे" अमेर्द्विषि अभिधेये इत्रप्रत्ययः चिच्च। अमित्रं शत्रुः॥

आ समिण्निकषिभ्याम्॥

"इण् गतौ" "कष शिष जष झष रुष रिह हिंसार्थाः"। सं नि इत्युपपदम्। संपूर्वादिणः निपूर्वाच्च कषेः आप्रत्ययः। गुणः। अयादेशः। समया निकषा परीक्षा। स्वरादि पाठादव्ययम् "अव्ययादाप्सुपः" इति लुक्॥

सूचेः क्ष्मन्॥

"सूच पैशुन्ये" सूचेः क्ष्मन्प्रत्ययः। सूक्ष्मं अणु॥

" पा रक्षणे " अस्मात् डुंसिच्प्रत्ययः । डकारष्टिलोपार्थः । इकार उच्चारणार्थः । चकारः स्वरार्थः । पातीति पुमान् पुरुषः । " सूतेः सप् प्रसवे पुमान् " इति भाष्यम् । अपरे डुंसुन्प्रत्ययं विहितवन्तः । तथा चाद्युदात्तः प्रयोगो दृश्यते ॥

॥ ६१० ॥ रुचिभुजिभ्यां किष्यन् ॥ ४—१८४ ॥

" रुच दीप्तौ " " भुजो कौटिल्ये " आभ्यां किष्यन्प्रत्ययः । ककारो गुणनिषेधार्थः । नकारः स्वरार्थः । रोचत इति रुचिष्यम् अभिनवम् ॥ भुजतीति भुजिष्यः दासः । भुङ्क्त इति वा भुजिष्यं मध्यम् । " अभिहतभुजिष्यम् " इति माघः ॥

॥ ६११ ॥ वचेरुष्यन् ॥ ४—१८५ ॥

वचेरुष्यन्प्रत्ययो भवति । वक्तीति वचुष्यः नकुलः ॥

॥ ६१२ ॥ वसेस्तिः ॥ ४—१८६ ॥

वसेस्तिप्रत्ययः । नाभेरधो वसतीति वस्तिः । उष्यतेऽनेनेति वा वस्तिः नाभेरधःप्रदेशः । वस्तिरिति वास्तेयम् [?] ॥

॥ ६१३ ॥ वौ तसेः ॥ ४—१८७ ॥

विशब्द उपपदे तसेस्तिप्रत्ययः । " तितुत्र " इतीट्प्रतिषेधः वितस्तिः गमनम् ॥

---

**रुचिभुजिभ्यां किष्यन् ॥**

**" रुच दीप्तौ " " भुज पालनाभ्यवहारयोः " आभ्यां किष्यन्प्रत्ययः । रुचिष्यः अभिप्रेतम् ॥ भुजिष्यः दाधो कृतम् [?] ॥**

**वसेस्तिः ॥**

**वसेस्तिप्रत्ययः । वस्तिः शरीरैकदेशः ॥**

**वौ तसेः ॥**

**वावुपपदे तसेस्तिप्रत्ययो भवति । वितस्यतीति वितस्तिः प्रमाणम् ॥**

॥ ६१४ ॥ प्रथेर्नित् ॥ ४—१८८ ॥

"प्रथ" अस्मात् तिप्रत्ययः निद् भवति । "खरि च" इति चर्त्वम् । [प्रत्तिः ॥]

---

॥ ६१५ ॥ दृणातेर्ह्रस्वश्च ॥ ४—१८९ ॥

[दृतिः ॥]

---

॥ ६१६ ॥ कृतॄकृपिभ्यः कीटन् ॥ ४—१९० ॥

"कॄ" "तॄ" "कृपू सामर्थ्ये" एभ्यः कीटन्प्रत्ययः । ककारः कित्कार्यार्थः । नकारः स्वरार्थः । कीर्यत इति किरीटः मकुटम् ॥ तिरीटम् प्लवम् ॥ कृपीटम् जलम् ॥ "कृपणकृपीटकर्पूरादयः कृपेरेव द्रष्टव्याः" इति भाष्यकारनिर्देशाल्लत्वाभावः ॥

---

॥ ६१७ ॥ रुचिवचिकुत्सिकुषिभ्यः कितच् ॥ ४—१९१ ॥

[ "रुच दीप्तौ अभिप्रीतौ च" "वच परिभाषणे" ] "कुत्स अव-

---

प्रथेर्नित् लोपश्च ॥

"प्रथ ख्याने" प्रथेस्तिप्रत्ययो नित् । लोपश्चास्यान्त्यस्य । प्रथते क्रियतेऽनेनेति प्रथा[प्रति] उपसर्गः ॥

दृणातेर्ह्रस्वश्च ॥

"दृ विदारणे" दृणातेस्तिप्रत्ययश्च नित् । ह्रस्ववचनसामर्थ्यात् गुणो न भवति । दृतिः सलिलभाजनं चर्म भस्त्रा ॥

कृतॄकृपिभ्यः कीटन् ॥

"कॄ विक्षेपे" "तॄ प्लवनतरणयोः" "कृपू सामर्थ्ये" एभ्यः कीटन्-प्रत्ययो भवति । कित्त्वात् गुणप्रतिषेधः । "ॠत इद्धातोः" रपरत्वम् । किरीटः मकुटः ॥ तिरीटः वेष्टनम् ॥ कृपीटः पेलनम् [?] ॥

रुचिकुटि[वचि]कुषि[कुटि]भ्यः कितच् ॥

---

1. The words within brackets are omitted in the ms.

क्षेपणे" "कुष निष्कर्षणे" एभ्यः कितच्प्रत्ययः। ककारो गुणनिषेधाय। चकारः स्वरार्थः। रोचतेऽसौ **रुचितः** भर्ता॥ उचितं योग्यम्॥ **कुसितम्** निन्दितम्॥ **कुषितः** ऋषिविशेषः। कुषितशब्दात् स्वार्थे कः। कुषितकः। कौषीतक इति छान्दसः प्रयोगः। केचित् कुटिमपि प्रक्षिपन्ति। कुटितं कुष्ठि [?] परिमितं च॥

---

॥ ६१८ ॥ कुठिकुषिभ्यां क्मलच् ॥ ४—१९२ ॥

आभ्यां क्मलच्। ककारचकारावनुबन्धावुक्तप्रयोजनौ। **कुड्मलं** मुकुलम्॥ **कुष्मलः** श्लेष्मा॥

---

॥ ६१९ ॥ कुषेर्लश्च ॥ ४—१९३ ॥

कुषिः सौत्रः। अस्मात् क्मलच्प्रत्ययः लकारश्चान्तादेशः। **कुल्मलं** भाण्डमिश्रीकरणम्॥

---

॥ ६२० ॥ असुन् ॥ ४—१९४ ॥

धातोरसुन्प्रत्ययः। उकार उच्चारणार्थः। नकारः स्वरार्थः। "अय वय

---

"रुच दीप्तौ" "वच परिभाषणे" "कुष निष्कर्षे" "कुट कौटिल्ये" कितच्प्रत्ययः। रुचितम् अभिप्रेतम्॥ उचितम्॥ कुषितं परिमाणम्॥ कुटितम् कुटिलम्॥

कुटिरुषिभ्यां क्मलच्॥

आभ्यां क्मलच्प्रत्ययः। कुड्मलः अविकासितमित्यर्थः॥ रुष्मलं कश्मलम्॥

कुषेर्लश्च॥

कुषेः क्मलच्प्रत्ययो लोऽन्तादेशश्च। कश्मलम् भेदनम्॥

कलेर्माषक्॥

कलेर्माषक्प्रत्ययः। कल्माषः॥

असुन्॥

असुन्प्रत्ययः सर्वधातुभ्यः। नकारः स्वरार्थः "अय वय मय तय नय

गतौ " अयत इति अयः लोहविशेषः ॥ वयः पक्षी शरीरावस्था च ॥ " तिज निशाने " तेजः दीप्तिः ॥ वर्चः ॥ रक्षः ॥ चेतः चित्तम् ॥ मन्यतेऽनेनेति मनः अन्तःकरणम् ॥ सर्तेः सरः जलाशयः ॥ तमः ॥ वचः ॥

---

## ॥ ६२१ ॥ पिबतेरी च ॥ ४—१९५ ॥

पिबतेरसुन्प्रत्ययः, तत्सन्नियोगेन धातोरन्त्यस्य ईकारादेशः। पीयत इति **पयः** उदकं क्षीरं च ॥

---

## ॥ ६२२ ॥ अशेर्भगे युट् च ॥ ४—१९६ ॥

" अशू व्याप्तौ " अस्मादसुन्प्रत्ययः भगेऽभिधेये। भज्यत इति भगः। " खनो घ च " इति घित्करणात् साधुत्वम्। भगशब्दः ऐश्वर्यादिर्वाचकः। तथा च निघण्टुः ॥

" ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा " ॥ इति

धातोर्युडागमश्च। टित्वादादिः। अश्नन्ति तेन सुखं मनुष्या इति **यशः** ॥ प्रजामुखं गर्तं योनिः उपस्थः भग इति पर्यायाः ॥

---

**गतौ " अयः लोहम् ॥ " वर्च दीप्तौ " वर्चः तेजो विजानीयात् ॥ वर्चार वाचक[?] ॥ "तिज निशाने " तेजः प्रभावः ॥ " रुधि स्नावरणे " रोधः तटः। " चिती संज्ञाने " चेतः संज्ञानम् ॥ " मन ज्ञाने " मनः अन्तःकरणम् ॥ " धृ गतौ " धरः आधारः ॥ " रक्ष पालने " रक्षः राक्षसः ॥ " इण् गतौ " अयः लोहः ॥ वचः ॥ अन [?] ॥ " तमु कांक्षायाम् " तमः अन्धकारः ॥ तमः उभापया शुकनामसः तपः इत्यादि [?] ॥**

**पिबतेरिः ॥**

**" पा पाने " पिबतेरसुन्प्रत्ययो भवति। इकारश्चान्तादेशो धातोः। " पयः क्षीरमुशन्त्यर्थात् पयस्सलिलमुच्यते।"**

**अशेर्भगे युट् च ॥**

**" अशू व्याप्तौ " अशेर्धातोः भगेऽभिधेये असुन्प्रत्ययः। युट् चागमो**

॥ ६२३ ॥ उब्जेर्बले बलोपश्च ॥ ४—१९७ ॥

" उब्ज आर्जवे " अस्मादसुन्प्रत्ययः बलेऽभिधेये । प्रत्ययसन्नियोगेन बकारलोपश्च । गुणः । **ओजः** बलम् ॥

---

॥ ६२४ ॥ श्वेः संप्रसारणं च ॥ ४—१९८ ॥

श्वेरसुन्प्रत्ययः संप्रसारणं च भवति । संप्रसारणे कृते गुणावादेशौ । श्वयतीति **शवः** मृतकम् । शवतेर्गत्यर्थादसुनि रूपे सिद्धे अर्थानुगमाभावात् पुनर्वचनम् । संज्ञाशब्देष्वप्यर्थानुगमा नैव [देव] व्युत्पत्तिरङ्गीकार्या । यत्र सर्वात्मनार्थानुगमो नास्ति, तत्रासौ नाश्रीयते यथा तैलपायिकादौ ॥

---

॥ ६२५ ॥ श्रयतेः स्वाङ्गे शिरः किच्च ॥ ४—१९९ ॥

" श्रिञ् " असुन्प्रत्ययः स्वाङ्गेऽभिधेये । धातोः शिरः इत्ययमादेशः, असुन् कित्त्वं च । श्रयति पूज्यत इति **शिरः** उत्तमाङ्गम् ॥

---

॥ ६२६ ॥ अर्तेरुच्च ॥ ४—२०० ॥

---

**धातोः । अश्नाति तेन सुखं मनुष्या इति यशः । प्रजामुखं गर्तं योनिः उपस्थम् भग इति पर्यायाः ।**

**उब्जेर्बले बलोपश्च ॥**

**उब्जेर्धातोर्बले गम्यमाने असुन्प्रत्ययः बलोपश्च । ओजः बलं दीप्तिश्च ॥**

**श्वयतेः संप्रसारणं च ॥**

**श्वयतेरसुन्प्रत्ययः संप्रसारणं चास्य भवति । धातोर्लोपश्च । शवः मृतशरीरम् ॥**

**श्रयतेः स्वाङ्गे शिरः किच्च ॥**

**" श्रीञ् सेवायाम् " अस्मादसुन्प्रत्ययः स्वाङ्गे गम्यमाने । शिरः ॥**

**अर्तेरुच्च ॥**

अर्तेरसुन्प्रत्ययः धातोरुकार अन्तादेशः स्वाङ्गेऽभिधेये । **उरः** वक्षः । "अर्तिपॄवपि" इति अरुः व्युत्पादितः ॥

---

## ॥ ६२७ ॥ व्याधौ शुट् च ॥ ४—२०१ ॥

अर्तेरित्येव । अर्तेरसुन्प्रत्ययः । व्याधावभिधेये शुडागमः । **अर्शः** व्याधि-विशेषः ॥

---

## ॥ ६२८ ॥ उदके नुट् च ॥ ४—२०२ ॥

अर्तेरित्येव । अर्तेरसुन्प्रत्ययः । प्रत्ययस्य नुडागमः उदकेऽभिधेये । **अर्णः** उदकम् ॥

---

## ॥ ६२९ ॥ इण आगसि ॥ ४—२०३ ॥

एतेरसुन्प्रत्ययः आगस्यभिधेये । आगोऽपराधः अपचारः कुत्सिताचारः । अपराधनिमित्तत्वात् पापमप्यपराधः । प्रत्ययस्य नुडागमः । **एनः** पापम् ॥

---

## ॥ ६३० ॥ रिचेर्धने किच्च ॥ ४—२०४ ॥

रिचिर्विनार्थः । अस्मादसुन्प्रत्ययः धनेऽभिधेये । प्रत्ययः कित् भवति । कित्त्वात्कुत्वम् । **रेकः** [रिक्णः][1] धनम् ॥

---

**"ऋ गतौ" अस्मादसुन्प्रत्ययः उश्च धातोः । "उरण्रपरः" उरः वृक्षः ॥**

**व्याधौ शुद्धिः[शुट् च] ॥**

**[अर्शः] ॥**

**उदके नुट् च ॥**

**उदके गम्यमाने अर्तेरेव धातोः असुन्प्रत्ययः नुट्चागमः । प्रत्ययस्य परत्वं "रषाभ्याम्" इतिणत्वम् । अर्णः उदकम् ॥**

**इण आगसि ॥**

**आगसि गम्यमाने इणोऽसुन्प्रत्ययो नुट्चागमश्च । एनः दुष्कृतम् ॥**

**सि[रि]चेर्धने घिच्च ॥**

**"रिचिर् विरेचने" अस्मादसुन्प्रत्ययः । धने गम्यमाने घिच्च नुट् च भवति । प्रत्ययस्य "च जोः कु घिण्यतोः" इति कुत्वम् । रेक्णः सुवर्णम् ॥**

---

1. The word within brackets is missing in the ms.

## ॥ ६३१ ॥ चायेरन्ने ह्रस्वश्च ॥ ४—२०५ ॥

नुडित्येव । "चायृ पूजानिशामनयोः" अस्मादसुन्प्रत्ययः । प्रत्ययस्य-नुडागमः । धातोरचो ह्रस्वः । पचि लोप[यलोपे]**चनः** चाय्यत इति कृत्वा । पुनश्च तसौछन्दसि गतिसंज्ञौ भवतः चनोहिकः [?] ॥

---

## ॥ ६३२ ॥ वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च ॥ ४—२०६ ॥

वृङ्शीङ्भ्यां असुन्प्रत्ययः । रूपे स्वाङ्गे च यथासङ्ख्यम् अभिधेये पुडागमः । व्रियते **वर्पः** ॥ "शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्" इति वार्तिकोदाहरणव्याख्याने कैयटाचार्यः "शुनःशेप इति ॥ ऋषिविशेषस्य संज्ञाया-मकारान्तोऽप्यस्ति शेपशब्दो न केवलः वस्ता[सका]रान्तः शुन इव शेप-मस्य[मस्येति] बहुव्रीहिः । एवं पुच्छलाङ्गूलाभ्यामपि बहुव्रीहिः" इति । एवं पकारान्तोऽपि साधु ॥

---

## ॥ ६३३ ॥ स्रुरीभ्यां तुट् च ॥ ४—२०७ ॥

"स्रु स्रवणे" "रीङ् स्रवणे" आभ्यामसुन्प्रत्ययः । प्रत्ययस्य तुडागमः । स्रवतीति **स्रोतः** प्रवाहः ॥ रीयत इति **रेतः** शुक्रः ॥

---

### चायतेरन्ने ह्रस्वश्च ॥

**"चायृ पूजानिशामनयोः" चायेरन्ने गम्यमाने असुन्प्रत्ययः । ह्रस्वश्च । नुमागमश्च । प्रत्ययस्य "लोपो व्योर्वलि" इति सकारलोपः । चना अन्नम् ॥**

### वृङ्शीभ्यां रूपस्वाङ्गयोः पुट् च ॥

**"वृङ् संभक्तौ" "शीङ् स्वप्ने" आभ्यामसुन्प्रत्ययः रूपस्वाङ्ग-योरभिधेययोः । पुट्चागमः । वर्पम् ॥ शेपः उपस्थः ॥**

### स्रुरीभ्यां तुट् च ॥

**"स्रु गतौ" "री गतिरेषणयोः" आभ्यामसुन्प्रत्ययः तुट् चागमः । स्रोतः प्रवाहो वारिवेगः ॥ रेतः शुक्रम् ॥**

॥ ६३४ ॥ पातेर्बले जुट् च ॥ ४—२०८ ॥

पातेरसुन्प्रत्ययः बलेऽभिधेये । प्रत्ययस्य जुडागमः । पातीति **पाजः** बलम् ॥

॥ ६३५ ॥ उदके थुट् च ॥ ४—२०९ ॥

पातेरित्येव । पातेरसुन्प्रत्ययः । उदकेऽभिधेये प्रत्ययस्य थुडागमः । पातीति **पाथः** उदकम् ॥

॥ ६३६ ॥ अन्ने च ॥ ४—२१० ॥

पातेरन्नेऽभिधेये असुन् थुडागमः । **पाथः** अन्नं च । योगविभाग उत्तरार्थः । उत्तरत्रान्नेऽपि यथा स्यात् उदके मा भूत् ॥

॥ ६३७ ॥ अदेर्नुं धश्च ॥ ४—२११ ॥

अदेरसुन्प्रत्ययः । अन्नेऽभिधेये धातोः नुमागमः । अन्त्यस्य धकारः । **अन्धः** । अद्यत इति अन्धः अन्नम् " द्विजातिशेषेण यदेतदन्धसा " इति भारवीये ॥

॥ ६३८ ॥ स्कन्देश्च स्वाङ्गे ॥ ४—२१२ ॥

---

पातेर्बले जुट् च ॥

पातेः बले गम्यमाने असुन्प्रत्ययः जुट् चागमः प्रत्ययस्य । पाजः जलम् ॥

उदके थुट् च ॥

उदके गम्यमाने असुन्प्रत्ययः थुट्चागमश्च प्रत्ययस्य । पाथः उदकम् ॥

अन्ने च ॥

अन्नेऽभिधेये नुंधौ चागमादेशौ । नुम् आगमः । धकार आदेशः धात्वन्तस्य । अन्धः अन्नम् ॥

स्कन्देश्च स्वाङ्गे ॥

" स्कन्दिर् गतिशोषणयोः " स्कन्देरसुन्प्रत्ययो धकारश्चान्तादेशः

स्कन्देरसुन्प्रत्ययः धश्चान्तादेशः स्वाङ्गेऽभिधेये । स्कन्धः वहः ॥

## ॥ ६३९ ॥ आपः कर्माख्यायां ह्रस्वश्च वा नुम् ॥ ४—२१३ ॥

[अपेः ॥ अप्नः ] ॥

## ॥ ६४० ॥ [रूपे जुट् च] ॥ ४—२१४ ॥

"आप्लृ व्याप्तौ" अस्मादसुन्प्रत्ययो भवति रूपेऽभिधेये । प्रत्ययस्य जुडागमः । अब्जः रूपम् ॥

## ॥ ३४१ ॥ उदकेनुं भश्च ॥ ४—२१५ ॥

ह्रस्वश्चेत्येव । आपः । असुन्प्रत्ययः उदकेऽभिधेये धातोर्नुमागमः भकारश्चान्तादेशः । ह्रस्वश्च धातोः । अम्भः उदकम् ॥

## ॥ ६४२ ॥ नहेर्दिवि भश्च ॥ ४—२१६ ॥

---

स्वाङ्गे गम्यमाने । स्कन्धः शरीरैकदेशः ॥ स्वाङ्गे गम्यमाने इति किम् ? स्कन्दो गुहः ॥

आपः कर्माख्यायां ह्रस्वश्च नुट् च वा ॥

"आप्लृ व्याप्तौ" आपेः कर्माख्यायां असुन्प्रत्ययः ह्रस्वश्च नुट् च वा । अप्नः अप्नसी अप्नांसि ॥ अपः अपसी अपांसि ॥

कूपे सरट् च ॥

कूपे अभिधेये असुन्प्रत्ययः । ह्रस्वश्चापेः । सरट् चागमः प्रत्ययस्य । सर्वान् देवगुणानाप्नुवन्तीति अप्सरसः ॥

उदके नुंभौ च ॥

उदके गम्यमाने आपेर्धातोः असुन्प्रत्ययो भवति । ह्रस्वश्च नुंभौ चास्यागमादेशौ भवतः । धातोर्नुमागमः ॥ मकारादेशः पकारस्य च । अम्भः उदकम् ॥

नहेर्दिवि च ॥

---

1. The words within brackets are omitted in the ms.

नहेरसुन्प्रत्ययः दिवि आकाशे वाच्ये भश्चान्तादेशः । नह्यतीति **नभः** आकाशम् ॥

---

## ॥ ६४३ ॥ इण आगोऽपराधे ॥ ४—२१७ ॥

एतेरसुन्प्रत्ययः धातोराग इत्ययमादेशः अपराधे वाच्ये । **आगः** अपराधः ॥

---

## ॥ ६४४ ॥ अमेर्हुक् च ॥ ४—२१८ ॥

अमेरसुन्प्रत्ययः धातोः हुगागमश्च अपराधे वाच्ये । **अंहः** पापम् ॥

---

## ॥ ६४५ ॥ रमेश्च ॥ ४—२१९ ॥

रमेश्चासुन्प्रत्ययः । हुगागमः । **रंहः** वेगः ।

---

## ॥ ६४६ ॥ देशे ह्श्च ॥ ४—२२० ॥

रमेरसुन्प्रत्ययः देशे वाच्ये ह्श्चान्तादेशः । रमते यस्मिन्देशे **रहः** । " रह त्यागे " अस्मादसुनि रूपे सिद्धे व्युत्पादनं प्रपञ्चार्थम् ॥

---

**" णह बन्धने " नहेरसुन्प्रत्ययः । भकारादेशश्च दिवि गम्यमानायाम् । नभः द्यौः ॥**

**इण आगोऽपराधे च ॥**

**अपराधे गम्यमाने । आगः अपराधः ॥**

**रमेश्च ॥**[1]

**रमेश्चासुनुप्रत्ययो भवति । इद् [हुक्] चागमः । [रंहः ॥][2]**

**[रंहः][2] तरश्च विज्ञेयो[यौ] जल[व]पर्याय[ना]मनी ॥**

**देशे ह च ॥**

**देशे गम्यमाने रमेरसुन्प्रत्ययः हकारादेशश्च धातोः । रहः शून्यप्रदेशः ॥**

---

1. The scribe evidently has omited to copy the sūtra **अमेर्हुक् च** (४–२१८) and its commentary

2. The words within brackets are omitted in the original

## ॥ ६४७ ॥ अञ्च्यञ्जियुजिभृजां कुश्च ॥ ४—२२१ ॥

एभ्योऽसुन्प्रत्ययः अन्त्यस्य कवर्गादेशश्च । **अङ्कः** चिह्नः ॥ **अङ्गः** क्षुद्रम् ॥ **योगः** समाधिः ॥ **भर्गः** दीप्तिः ॥

---

## ॥ ६४८ ॥ भूरञ्जिभ्यां कित् ॥ ४—२२२ ॥

भूरञ्जिभ्यामसुन्प्रत्ययः किद्भवति । **भुवः** अन्तरिक्षम् । महाव्याहृतिरव्ययम् ॥ रजतीति **रजः** रेणुः । "रजनरजकरजस्सु कित्त्वात्" इति वार्तिकम् ॥

---

## ॥ ६४९ ॥ वस्तेर्णित् ॥ ४—२२३ ॥

"वस आच्छादने" अस्मादसुन् णिद्वत् भवति । णित्त्वादुपधाया वृद्धिः । वस्यतेऽनेनेति **वासः** वस्त्रम् ॥

---

### अञ्च्यञ्जि[जि]युजिभृजि[भर्जि]भ्यः कु च ॥

**"अञ्चु गतिपूजनयोः", "अज गतिक्षेपणयोः" "युजिर् योगे" "भ्रजि भृजी भर्जने" एभ्योऽसुन्प्रत्ययः, कवर्गादेशश्चान्तादेशः । अङ्कः लक्षणम् चिह्नम् ॥ अजति गच्छति विहायसा अङ्गः । वीभावो बहुलवचनान्न भवति ॥ युनक्ति तेन तस्मिन्नात्मानमिति योगः ध्यानम् ॥ भज्ज [भर्ज्] । गुणीकृतस्य ग्रहणम् । भृज्यतेः[भर्जतेः] निवृत्त्यर्थः । भर्जति प्रजास्संहरतीति भर्गः महेश्वरः प्रजापतिर्वा ॥**

### भूरजिमथितृपृभ्यः कित् ॥

**एभ्यः असुन्प्रत्ययः किच्च भवति । तेन भाव [भवति] इति भुवः अन्तरिक्षम् ॥ रज्यतेऽनेनेति रजः पांसुः पापं वा ॥ मन्थति तस्मिन्निति मथः रहस्ये पृथक्त्वे च ॥ तिरः व्यवधानम् । "ऋत इद्धातोः" ॥ "उदोष्ठ्यपूर्वस्य" इति पुरः अग्रतः ॥**

### वस्तेर्णिः ॥

**वस्तेरसुन्प्रत्ययः णिच्च । "अत उपधायाः" वृद्धिः । वासः वस्त्रम् ॥**

## ॥ ६५० ॥ चन्देरादेश्छः ॥ ४—२२४ ॥

"चदि आह्लादने" अस्मादसुन्प्रत्ययः। आदेश्छकारादेशो धातोः। चन्दति आह्लादयति वैदिकानिति **छन्दः** वेदः। छन्दशब्दोऽकारान्त इच्छावाची यस्यायं प्रयोगः "स्वच्छन्दा हि वचसां प्रवृत्तिरर्थस्तु परीक्ष्यः" इति ॥

---

## ॥ ६५१ ॥ पचिवचिभ्यां सुट् च ॥ ४—२२५ ॥

पचिवचिभ्यां असुन्। सुट् च प्रत्ययस्यागमः। [illegible] पति[परि]ग्रहः ॥ **वक्षस्** उरः ॥

---

## ॥ ६५२ ॥ वहिभाधाभ्यश्छन्दसि ॥ ४—२२६ ॥

सुडित्येव। एभ्यश्छन्दसि असुन्प्रत्ययः। प्रत्ययस्य सुडागमः। **वहस्** ॥ **भासस्** कालः ॥ **धासस्** पुरुषः ॥

---

## ॥ ६५३ ॥ इण आसिः ॥ ४—२२७ ॥

छन्दसीत्येव। एतेरासिप्रत्ययः। **अयाः** उदकम्। आस्थालावीति [अयाः स्वरादीति] अव्ययम् ॥

---

### चन्देरादेशश्च[देश्च] छः ॥

"चदि आह्लादने" चन्देरसुन्प्रत्ययः। आदेश्च छकारः। **छन्दः** गायत्र्यादि ॥

### पचिवचिभ्यां सुट् ॥

**पचिवचिभ्यामसुन्प्रत्ययः। सुडागमः प्रत्ययस्य। "चोः कुः" इति कुत्वम्। "इण्कोः" इति षत्वम्। पक्षः अरण्यम् ॥ वक्षः उरः ॥**

### वहिहाधाञ्भ्यश्छन्दसि ॥

**"वह प्रापणे" "ओ हाक् त्यागे" "डु धाञ् धारणपोषणयोः" एभ्यः असुन्प्रत्ययः। सुट्चागमश्च प्रत्ययस्य छन्दसि विषये। वक्षः ॥ हासः चन्द्रमाः ॥ धासः पुरुषः ॥**

### इण आसिः ॥

**इण आसिप्रत्ययः छन्दसि विषये। अयाः अग्निः। छन्दसीति किम्? अयः ॥**

## ॥ ६५४ ॥ मिथुनेऽसिः पूर्ववच्च सर्वम् ॥ ४—२२८ ॥

मिथुने स्त्रियां पुंसि च गम्यमाने सर्वधातुभ्यः असिप्रत्ययः। इकार उच्चारणार्थः। पूर्ववच्च असुनीव सर्वं कार्यम्। सर्वग्रहणं प्रकृतिसंबन्धिनोऽपि कार्यस्य परिग्रहाय। प्रत्ययान्तरकरणं स्वरे विशेषात्। "अशेर्भगे युट् च" यशः ॥ "उब्जेर्बले बलोपश्च" इत्यादिर्भवति ॥

---

## ॥ ६५५ ॥ नञ्याहन एह च ॥ ४—२२९ ॥

आङ्पूर्वाद्धन्तेर्नञ्युपपदे असिप्रत्ययः। धातूपसर्गसमुदायस्य एहादेशः। **अनेहा** कालः। "ऋदुशन" इति अनङ्। भूताधिकारप्रयोजनवार्तिके "अनेहा ××××× आदधानस्य" इति उदाहरणव्याख्यानसमये कैयटाचार्यः-- "अनेहा—इति ॥ "नञ्याहन एह च" इति। अस्य प्रयोगे सति भूताधिकारे [असिप्रत्ययोऽसत्यधिकारे] सर्वस्मिन् काले तृचः[चं] वासेति [बाधेत। सति] त्वधिकारे वर्तमाने" इति। एवं च वर्तमाने असिप्रत्ययः ॥

---

## ॥ ६५६ ॥ विधाञो वेध च ॥ ४—२३० ॥

---

मिथुनेऽसिः पूर्ववच्च सर्वम् ॥

मिथुने गम्यमाने सर्वधातुभ्यः असिप्रत्ययः। पूर्वच्च सर्वं कार्यं भवति आगमादेशादि। "अश भोजने" इन्द्र उपपदे इन्द्रयशाः ॥ विष्णु इत्युपपदे विष्णुयशाः ॥ अति उपपदे अत्योजाः ॥ "तिज निशाने" सुतेजाः ॥ "वर्च दीप्तौ" सुवर्चाः। "अत्वसन्तस्य चाधातोः" इति दीर्घः ॥ सर्वेऽर्थे असुन्प्रत्ययान्तानि[न्ताः] नपुंसकलिङ्गाः शब्दाः। तेषामेवासिप्रत्ययः प्रयुज्यते। सर्वं पूर्ववच्च सर्वमागमादिलोपादिकर्तव्यम् ॥

नञ्याहन एह च ॥

नञि उपपदे आङ्पूर्वस्य हनेः हनि[असि]प्रत्ययः मिथुने गम्यमाने। एन एध [?] इति चादेशौ भवतः। नलोपो नञः। "तस्मान्नुडचि" इति नुडागमः॥ "ऋदुशनस्फुरुदंसोऽनेहसाम्" इत्यनङादेशः॥ अनेहा बृहस्पतिरेव ॥

विधाञो वेध च ॥

विपूर्वाद्धाञोऽसिप्रत्ययः । धातूपसर्गसमुदायस्य वेधादेशः । विदधातीति **वेधाः** ब्रह्मा । "विध विधाने" असुनि रूपे सिद्धे स्वरार्थं पुनर्व्युत्पादनम् । विधतेर्वा ॥

---

## ॥ ६५७ ॥ नुवो धुट् च ॥ ४—२३१ ॥

नौतेरसिप्रत्ययः । प्रत्ययस्य धुडागमः । **नोधाः** ऋषिविशेषः ॥

---

## ॥ ६५८ ॥ गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ॥ ४—२३२ ॥

गतिकारकयोरपि पूर्वपदयोर्धातोरसिप्रत्ययः पूर्वपदप्रकृतिस्वरत्वं च भवति । कृदुत्तरपदप्रकृतिस्वरस्यापवादः । सुयशाः देवयशाः इत्यादि ॥

---

विपूर्वाद्धाञ् । असिप्रत्ययः । वेध इति चादेशः । वेधाः प्रजापतिः । विविधानि भूतानि दधातीत्यर्थः । विदधे[विधे]र्वासिप्रत्ययः, वेध इत्ययं चादेशः । "विध विधाने" विदधति [विधति] भूतानीति वेधाः प्रजापतिः अग्निः मेधावी च । वाग्रहणं विधाञो विधतेर्वा इत्य······वेधाः ॥

नुवो धुक् च ॥

"णु स्तौ" । असिप्रत्ययः मिथुने गम्यमाने धुक्चागमः धातोः । "पुगन्तलघूपधस्य च" इति गुणः । नोधा ऋषिः । मिथुन इत्येव । नवः [?] ॥

**गतिकारक[कोप]पदयोरपि पूर्वपदस्य प्रकृतिस्वरत्वं च ॥**

**गतिकारकयोरपि मिथुने गम्यमाने असिप्रत्ययः, पूर्वपदप्रकृतिस्वरत्वं च भवति । तथाचैवोदाहृतम्—सुखेन अनु इति सुख[सु]यशाः [?] ॥ अतिशयनाः [?] अति इति [?] अतियशाः सुपयाः सुश्रोताः । कारकोपादानादिति इति इन्द्र यत इति [?] नागयशाः सूर्यवर्चाः ब्रह्मवर्चाः । 'गतिकारकयोरपि पूर्वपदे प्रकृतिस्वरं[रत्वं] च' इति वक्तव्यम्; तदारभ्यते विशेषज्ञापनार्थम् । किं तदिति तत्रोच्यते—गतिकारकयोरुपपदात् कृत्स्वर[रं] उपपदस्वरं[रः] बाधते । पूर्वपदस्वरः कथं स्यादिति । गतिशब्देन निपाताः परिगृह्यन्ते । गतिश्च कारकश्च गति-**

## ॥ ६५९ ॥ चन्द्रे मो डित् ॥ ४—२३३ ॥

चन्द्रे उपपदे माङः असिः डिद्भवति । पूर्वपदप्रकृतिस्वरत्वं च । **चन्द्रमाः** सोमः । चन्द्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः । केचिद्दासीभारादिषु चन्द्रमसं पठन्ति । केचित् " चन्द्रे मो डिन्निच्च " इति पठन्ति । तेषां चन्द्रमाःशब्द आद्युदात्तः ॥

---

## ॥ ६६० ॥ वयसि धाञः ॥ ४—२३४ ॥

वयसि उपपदे धाञोऽसिप्रत्ययः । वयो दधातीति **वयोधाः** अन्नम् ॥

---

## ॥ ६६१ ॥ पयसि च ॥ ४—२३५ ॥

पयसि चोपपदे धाञोऽसिप्रत्ययः । पयो दधातीति **पयोधाः** मेघः ॥

---

## ॥ ६६२ ॥ पुरसि च ॥ ४—२३६ ॥

---

**कारकौ तयोर्गतिकारकयोः । पूर्वपदप्रकृतिस्वरः च भवति ॥ पूर्वं चतत्पदं च पूर्वपदम् । पूर्वपदस्य प्रकृतिः पूर्वपदप्रकृत्याः पूर्वपदप्रकृतेः [?] स्वरः पूर्वपदप्रकृतिस्वरः । तस्य भावः पूर्वपदप्रकृतिस्वरत्वम् । अपिः संभावने द्रष्टव्यः । किं संभावयति ? उपपदस्वरोऽपि कथं स्यादिति ॥**

चन्द्रे मो ङित् ॥

**चन्द्रे इत्युपपदे मा इत्येतस्मादसिप्रत्ययः ङिच्च[1] । ङित्वात् " आतो इटि च " इत्याकारलोपः । " अत्वसन्तस्य " इति दीर्घत्वम् । चन्द्रमाः शशी ॥**

[पयसि धाञः] ॥

**पयोधाः मेघः ॥**

पुरसि च ॥

---

१. The ms. adds the words **पयोधाः मेघः········पुरोहितः** and then continues the commentary on the sūtra **चन्द्रे मो ङित्.**

२. This sūtra is omitted in the ms.

पुरसि चोपपदे धाञोऽसिप्रत्ययः । पुरो धीयते कार्येष्विति **पुरोधाः** पुरोहितः । केचित् " पूर्वपदप्रकृतिस्वरत्वं च " इति सर्वत्रानुवर्तयन्ति ॥

---

**॥ ६६३ ॥ पुरूरवाः ॥ ४—२३७ ॥**

पुरुशब्द उपपदे रौतेरसिप्रत्ययः पूर्वपदस्य दीर्घत्वं च निपात्यते । पुरु प्रभूतं रौति **पुरूरवाः** राजर्षिः ॥

---

**॥ ६६४ ॥ चक्षेर्बहुलं शिच्च ॥ ४—२३७ ॥**

चक्षेरसिः बहुलं शिच्च भवति । शित्त्वात् सार्वधातुकत्वे ख्याञभावः । प्रचक्षाः बृहस्पतिः ॥ नृचक्षाः राक्षसः ॥ यदा बहुलवचनात् शिन्न भवति तदार्धधातुकत्वात् चक्षिङः ख्याञ् भवति ॥ विख्याः प्रख्याः आख्याः ॥

---

**॥ ६६५ ॥ उषः कित् ॥ ४—२३९ ॥**

उषेरसिप्रत्ययः किद्भवति । **उषः** प्रभातसमयस्य पूर्वकालः ॥

---

**पुरसि उपपदे धाञः असिप्रत्ययो ञिच्च । पुरोधाः पुरोहितः ॥**

**पुरूरवाः ॥**

**पुरूरवाः इत्ययं शब्दः असिप्रत्ययान्तो निपात्यते । " रु शब्दे " पुरन् [पुर] इत्युपपदः । पुरशब्दस्य टिलोपः [?] ऊकारान्तादेशः । धातोः गुणः । अवादेशः । पुरूरवाः बुधसुतो राजर्षिः ॥**

**चक्षेर्बहुलं शिच्च ॥**

**" चक्षिङ् व्यक्तायां वाचि " चक्षेरसिप्रत्ययः बहुलं शिच्च । यदा शित् तदा " तिङ्शित्सार्वधातुकम् " इति सार्वधातुकसंज्ञायां चक्षिङः ख्याञ् [न[१]] भवति । चक्षाः उपाध्यायः ॥ यथा [यदा] बहु [बहुल] वचनाच्छिन्न [नात् शिन्न] भवति तदा आर्धधातुकत्वात् गु णप्रतिषेधः [?] ॥**

**[[२]उषः कित् ॥]**

**उषः रात्र्यन्तः ॥**

---

१. The word within brackets is omitted in the ms.

२. This sūtra is omitted in the original.

## ॥ ६६६ ॥ दमेरूनसिः ॥ ४—२४० ॥

दमेरूनसिप्रत्ययः । **दमूनाः** मृगपतिः [गृहपतिः] गृहं च ॥

---

## ॥ ६६७ ॥ अङ्गिरा अप्सराः ॥ ४—२४१ ॥

" अगिः गत्यर्थः " अस्मादसिप्रत्ययः । प्रत्ययस्य इरुडागमश्च निपात्यते । **अङ्गिराः** ऋषिविशेषः ॥ आप्नोतेरसिः । सरडागमः प्रत्ययस्य निपात्यते । आप्यन्त इति **अप्सरसः** काश्चन देववेश्याः । बाहुलकाद्वहेरसिप्रत्यये धकारेऽन्ते देशे[न्तादेशे] संप्रसारणे दीर्घत्वे च ऊधः ॥

---

## ॥ ६६८ ॥ दिविभुजिभ्यां विश्वे ॥ ४—२४२ ॥

" दिवु क्रीडादौ " " भुज पालनाभ्यवहारयोः " आभ्यामसिप्रत्ययः विश्वशब्द उपपदे । विश्वान्दीव्यतीति **विश्वेदेवाः** अग्निः ॥ विश्वं भु [भुनक्ति] इति **विश्वेभोजाः** परमेश्वरः ।निपातनाद्विश्वशब्दस्य एकारान्तत्वम् । " तत्पुरुषे कृति बहुलम् " इति वा अलुक् सप्तम्याः ॥

---

### दमेरुनसिः ॥

दमेरुनसिप्रत्ययः । दमुनाः गृहपतिः ॥

### अङ्गिरा अप्सराः ॥

इमौ शब्दौ असिप्रत्ययान्तौ निपात्येते । " अगि रगि लगि गत्यर्थाः " अङ्ग इति [इरि] स्थिते असिप्रत्ययो निपात्यते । अथवा प्रत्ययस्य चा[इरु] डागमः । अङ्गिराः ॥ " सृ गतौ " अपपूर्वस्यासिप्रत्ययः । उपसर्गपकारस्य लोपो निपात्यते । अप्सराः । अप् इत्युपदम् अद्भ्यः प्रीयन्ते [प्रजायन्ते] अप्सु रमन्ते अप्सु राजन्त वेशं [वा] अप्सराः देवगणिकाः ॥

### विदि[दिवि]भुजिभ्यां विश्वे ॥

" दिवु " क्रीडादिषु । " भुज पालनाभ्यवहारयोः " आभ्यां विश्वे उपपदे असिप्रत्यये विश्वदेवाः महेश्वरः अग्निश्च ॥ विश्वभोजाःअग्निरेव ॥

॥ ६६९ ॥ वशेः कनसिः ॥ ४—२४३ ॥

"वश कान्तौ" अस्मात् कनसिप्रत्ययः । ककारः संप्रसारणार्थः । उश्यत इति **उशना** शुक्रः । "ऋदुशन" इत्यनङ् । यद्यपि सिसी[सस्ति]वशी छान्दसौ तथापि भाषायामपि उशनसः प्रयोगः ॥

इतीन्दुग्रामसमीपवर्त्यग्रहारवास्तव्येनोत्तरमेर्वभिजनेन धर्मशास्त्र-
पारगार्यभट्टसूनुना गार्ग्येण श्वेतवनवासिनाम्ना
विरचितायामुणादिवृत्तौ चतुर्थः पादः ॥



---

[वशेः कनसिः] ॥[1]

**वशेः कनसिप्रत्ययः । ग्रहिज्यादिसूत्रेण संप्रसारणम् । उशना शुक्रः ॥**

**इतीन्दुग्रामसमीपवर्त्यग्रहारवास्तव्येनोत्तरमेर्वभिजनेन धर्मशास्त्र-
पारगार्यभट्टसूनुना गार्ग्येण श्वेतवनवासिनाम्ना
विरचितायामुणादिवृत्तौ चतुर्थः पादः ॥**

---

1. This sūtra is omitted in the original.

## ॥ अथ पञ्चमः पादः ॥

### ॥ ६७० ॥ अदि भुवो डुतच् ॥ ५—१ ॥

"भू सत्तायाम्" अस्मात् अदि उपपदे डुतच्प्रत्ययः। डकारष्टि-लोपार्थः। अद्भवतीति **अद्भुतम्** आश्चर्यम्। विस्मयपर्यायोऽयमद्भुतशब्दः। यथाकथंचित् व्युत्पत्तिः। तेन क उपपदार्थः, कोऽपि प्रकृत्यर्थः, कश्च प्रत्ययार्थः, इत्यभिनिवेशो न कार्यः। अत्तीति अद्। "क्विप् च" इति क्विप् ॥

### ॥ ६७१ ॥ गुधेरूमः ॥ ५—२ ॥

"गुध परिवेष्टने" अस्मादूमप्रत्ययः। गुध्यतीति **गोधूमः** धान्यविशेषः॥

### ॥ ६७२ ॥ मसेरूरन् ॥ ५—३ ॥

"मसी परिणामे" अस्मादूरन्प्रत्ययः। **मसूरः** धान्यविशेषः। "मसेश्च" इति मसुरशब्दोऽपि साधुः।

---

॥ अथ पञ्चमः पादः ॥

**अदि भुवो डुतच् ॥**

**अदि उपपदे "भू सत्तायाम्" इत्येतस्मिन् [स्मात्] डुतच्प्रत्ययो भवति। अद्भुतं आश्चर्यम् ॥**

**गुधेरूमः ॥**

**"गुध वेष्टने" गुधेरूमप्रत्ययो भवति। परिवेष्ट्यन्ते भक्ष्यविशेषास्तै-रिति गोधूमः व्रीहिजातिः ॥**

**मीमसिकति[कुटि]खर्जिभ्य ऊरः ॥**

**एभ्य ऊरप्रत्ययो भवति। मिनाति क्षुद्रजन्तुमिति मयूरः॥ मस्यति नाशयति वित्तमिति मसूरः सस्यजातिः॥ "कुट कौटिल्ये" कुटूरः विषमः॥ खर्जन्ति तस्मादिति खर्जूरः। बहु[बहुल]वचनात् वल्कूरः [वल्लूरः] मांसविशेषः कृत्तः॥**

॥ ६७३ ॥ स्थः किच्च ॥ ५—४ ॥

तिष्ठतेरूरन्प्रत्ययः किच्च भवति । कित्त्वात् "आतो लोप इटि च" इत्याकारलोपः । स्थीयतेऽस्मिन्निति स्थूरः पृष्ठप्रदेशोऽश्वानाम्, वृक्षविशेषश्च ॥

॥ ६७४ ॥ पातेर्डतिः ॥ ५—५ ॥

पातेर्डतिप्रत्ययः । पातीति पतिः स्वामी । डत्यन्तायाः संख्यायाः षट्संख्याविधानात् बहुगणादिसूत्रे वतुना साहचर्यात् तद्धितस्यैव डतेर्ग्रहणात् पतय इति जसः श्रवणं भवत्येव ॥

॥ ६७५ ॥ वातेर्नित् ॥ ५—६ ॥

वातेर्धातोर्डतिप्रत्ययः । वातीति वतिः वायुः ॥

॥ ६७६ ॥ तृहेः क्नन् हलोपश्च ॥ ५—७ ॥

"तृह हिंसायाम्" अस्मात् क्नन्प्रत्ययः हलोपश्च । कित्त्वान्नलोपवचनः । ककारो गुणनिषेधाय । नकारः स्वरार्थः । तृह्यत इति तृणं धान्यस्तम्बः ।

---

महिकणिचण्यलिपलिमलिभ्यो णित् ॥

एभ्य ऊरप्रत्ययो भवति, णिच्च । माहूरः पूजकः ॥ कण्ट[कण]तीति काणूरः ॥ विष्णवे युद्धं चणितवानिति चाणूरः ॥ अलतीति आलूरः ॥ पलतीति पालूरः ॥ मलतीति मालूरः ॥

स्थः किच्च ॥

[1]तिष्ठति तस्मिन्यालमृदोवेति[?]स्थूरः ॥

पातेरतिः ॥

"पा रक्षणे" तस्मादतिप्रत्ययः किच्च । पातीति पतिः स्वामी ॥

वातेर्नित्वा ॥

वातेरतिप्रत्ययो नित्वा भवति । वतिः[वातिः]वायुः ॥

तृहेः क्नो हलोपश्च ॥

---

1. The ms. adds पातीति पातिप्रत्ययः.

"तृण अदने" तानादिकः। अस्मादिगुपधलक्षणे के तृणसिद्धिः। तथापि स्वरभेदात् पुनर्वचनम् ॥

---

॥ ६७७ ॥ वृङ्लुटितनितटितण्डिभ्य उलच् ॥ ५—८ ॥

"वृङ् संभक्तौ" "लुट प्रतिघाते" "तनु विस्तारे" "तट उच्छ्राये" "तडि ताडने" एभ्य उलच्प्रत्ययः। वरुलं वरेण्यम् ॥ लोटुलम् ॥ तनुलं मृदुलम् ॥ [तटुलम् ॥] तण्डुलम्। तण्डिग्रहणमनर्थकम्, तण्डुलशब्दस्य "सानसिधर्णसि" इत्यादौ सूत्रे निपातितत्वात्। निपातनकार्यसिद्ध्यर्थात् स्वरस्यापि सिद्धत्वात् ॥

---

"तृह हिंसायाम्" तृहेः क्तप्रत्ययः [2]हकारलोपश्च। "रषाभ्याम्" इति णत्वम्। तृणं वीरुधम्[रुत्] ॥

वृङ्लुटितनिताधी[तडि]भ्य ऊ[उ]लच् ॥

"वृङ् संभक्तौ" "लुट विलोटने" "तनु विस्तारे" "तड आघाते" एभ्य ऊ[उ]लच्प्रत्ययः। तण्ड इत्ययं चादेशः धातूनाम्। प्रीयन्ते [व्रियन्ते] तन्यन्ते ताडयन्त इति तण्डुलाः ॥

हृहि[षि]मगिशङ्किचटिवडि[न्दि]भ्यश्च ॥

हर्षुलः हर्षशीलः ॥ मङ्गति तस्मिन् इति मङ्गुलः ॥ शङ्क्यतेऽनयेति शङ्कुलः ॥ "चट स्फुटभेदने" चटुलः ॥ वन्द्यत इति वन्दुलः ॥

कुमुलतुमुलमुकुलमण्डू[ञ्जु]लादयश्च ॥

कुमुल इत्येवमादयः शब्दा निपात्यन्ते। काम्यत इति क[कु]मुलः ॥ ताम्यन्ति तस्मिन् बहूनिति[नीति]तुमुलः। हयगजसंकीर्णं यथान्यायं युद्धं तुमुलमुच्यते ॥ अपरे तुमुलो विनाश[?] ॥ मङ्क्तेऽस्मिन्निति मुकुलः ॥ मन्यते[3] मञ्जुला मञ्जुलकं यथासंभवमर्थः ॥

---

१. The word within brackets is omitted in the ms.

२. The ms. adds हकारप्रत्ययः.

३. The ms. adds मटते.

॥ ६७८ ॥ दंसेष्टटनौ न आ च ॥ ५—९ ॥

चुरादिरवृत्कृत इति दंसिश्चौरादिकः । दंसेर्धातोः ट टन् इत्येतौ प्रत्ययौ भवतः, धातोः नकारस्य आकारादेशश्च । दंसयतीति **दासः** स्वरे विशेषः । टित्त्वात् ङीप् ॥

॥ ६७९ ॥ दंशेश्च ॥ ५—१० ॥

"दंश दंशने" "दशि दशने" वा । दंशेश्च टटनौ भवतः । नकारस्य च आकारादेशः । **दाशः** कैवर्तः । दाशी निषादस्त्री ॥

---

उत्तूरुडादयश्च ॥

उत्तूरुडादयश्च शब्दा निपात्यन्ते । उत्तूरुड उत्क्रियत्वे ते वा उत्तूरुड [?] ॥

कचि[टि]पटिमदिलवि[पि]लखिकल्यनिरटिलटिकॄभ्यो हलच् [अहच्] ॥

[[1]पभ्योऽहच्] प्रत्ययो भवति । कटतीति कटहः शरीरम् ॥ पटतीति पटहः ॥ मदन्त[मन्दत इ]ति मन्देहः नीलः ॥ लपन्तीति लपहः नयनकान्तो विद्वान् दक्षिणश्च ॥ लखन्ति तमिति लखहः ॥ कलहः ॥ अनतीति अनहः ॥ रटतीति रटहः ॥ लटत इति लटहः ॥ किरतीति करहः ॥

पुलेः किच्च ॥

पुलेरहच्प्रत्ययो भवति किच्च । पोलयतीति पुलहः ॥

शकटा[शका]दिभ्योऽटच् ॥

शकटा[शका]दिभ्योऽटच्प्रत्ययो भवति । कुर्के तद्वाहन कर्माणीति शकटं[?]शक्नुवन्ति तेन वा शकटम् । अवति जलदानेन जीवतमिति अवटम् ॥

कुलादिभ्यः कित् ॥

कुलादिभ्योऽटच्प्रत्ययः किच्च ॥ कोलन्ति तस्यां युवान इति कुलटा । कुलात् कुलमटतीति कामत इति कुलटा ॥

दंसेष्टटनौ न आ पः[च] ॥

"दसि दशने" दंसेः टटन्प्रत्ययौ भवतः । नकारस्याकारादेशः । दासः ॥

[दंशेश्च[2] ॥]

दाशः मत्स्यजीवी । दाशी निषादी ॥

---

१. The words within brackets are omitted in the ms.

२. This sūtra is omitted in the ms.

॥ ६८० ॥ सौ रमेः क्तः ॥ ५—११ ॥

सुशब्द उपपदे रमेर्धातोः क्तप्रत्ययः । कित्त्वादनुनासिकलोपः । सुरतं निधुवनम् । सुपूर्वाद्रमेः " नपुंसके भावे क्तः " इति क्तेऽपि विहिते सुरत-शब्दस्य सिद्धत्वादुत्तरार्थं सूत्रम् ॥

॥ ६८१ ॥ दमे पूर्वपदस्य दीर्घः ॥ ५—१२ ॥

दमनं दमः । तस्मिन् अभिधेये सौ रमेः क्तप्रत्ययः । पूर्वपदस्य दीर्घो भवति । शोभनं रमयतीति सूरतः दान्तः पशुः । " अचण्डी सूरता " इति हलायुधः । उपशान्तश्च ॥

॥ ६८२ ॥ पूङो यण्णु[यत् णुट् ]ह्रस्वश्च ॥ ५—१३ ॥

" पूङ् पवने " अस्मात् यत्प्रत्ययः, तस्य णुडागमः, धातोः ह्रस्वश्च । पवत इति पुण्य धर्मः । पुण्यशब्दः " यतोऽनावः " इत्याद्युदात्तः । तत्र हि द्व्य-जित्यनुवर्तते ॥

॥ ६८३ ॥ स्रंसेः शिः कुट् किच्च ॥ ५—१४ ॥

" स्रंसु अवस्रंसने " अस्माद्यत्प्रत्ययः किच्च भवति । धातोः शि इत्यय-मादेशः । प्रत्ययस्य कुडागमः । स्रंसत इति शिक्यं यतीनां भिक्षालाबुवेष्टनविशेषः ।

---

**सौ रमे दमे पूर्वपदस्य दीर्घः ॥**

सौ उपपदे रमेः क्तप्रत्ययो भवति दमेऽर्थेगम्यमाने पूर्वपदस्य च दीर्घः । " अनुदात्तोपदेश " इत्यादिना अनुनासिकस्य लोपः । अतः सूरतः [दान्तः]उपशान्तश्च ॥

**पूञो यन्त्रध्द्र[यत् णुक् ]ह्रस्वश्च ॥**

" पूञ् पवने " पुनातेर्यत्प्रत्ययो भवति णुगागमो ह्रस्वश्च । पुण्यं धर्मः ॥

**स्रंसेः शिः कुट् किच्च ॥**

---

1. The within brackets in omitted in the ms.

अघ्न्यादित्वात् स्वरस्यानिषिद्धत्वादनर्थकमिदं सूत्रमिति केचित् । अन्तरिते [अस्वरित] त्वसिद्धये निपातनमवश्याश्रयणीयम् ॥

॥ ६८४ ॥ अर्तेः क्युरुङ्श्च ॥ ५—१५ ॥

अर्तेः क्युप्रत्ययः धातोरुङ् इत्ययमादेशः । ककारो गुणनिषेधाय । ङकारोऽन्त्यादेशाय[?] । "उरण् रपरः" इतिरपरत्वम् । उरणः मेषः ॥

॥ ६८५ ॥ हिंसेरीरन्नीरचौ ॥ ५—१६ ॥

हिंसेः ईरन् ईरच् इत्येतौ प्रत्ययौ भवतः । प्रत्यययोः स्वरे विशेषः । एकस्मिन्प्रत्यये विरुद्धकार्यमनुबन्धद्वयं संबन्धुं न शक्यमिति प्रत्ययद्वयविधानम् । हिनस्तीति हिंसीरः व्याघ्रः ॥

॥ ६८६ ॥ उदि दृणातेरलचौ पूर्वपदान्तलोपश्च ॥ ५—१७ ॥

"दॄ विदारणे" उदि उपपदे दृणातेः अल् अच् इत्येतौ प्रत्ययौ भवतः । उच्छब्दान्तलोपश्च भवति । अलचोः स्वरे विशेषः । अच्यन्तोदात्तत्त्वम् । अलिप्रत्ययात्पूर्वस्योदात्तत्वम् । उद्दृणातीति उदरं जठरम् ॥

---

सूनसुद्धनसु "[स्रंसु ध्वंसु] अधःपतने" स्रंसेर्यण्[यत्]प्रत्ययो भवति कुडागमश्च । शि इत्ययमादेशः किच्च । शिक्यं कुटुम्बिकोपकरणम् ॥

अर्तेः कुज्यु[क्युजु]च्च ॥

"ऋ गतौ" अर्तेः क्युच्प्रत्ययो भवति उकारश्चान्तादेशः । चकारार्थः[[1]चकारः स्वरार्थः] "युवोरनाकौ" इत्यनादेशः । उरणः मेषः ॥

हिंसेरीरन्नीरचौ ॥

"हिस हिंसायाम्" हिंसेः ईरन् ईरच् इत्येतौ प्रत्ययौ भवतः । नकारः स्वरार्थः, चकारश्च । हिंसीरः व्याघ्रः । स्वरे विशेषः ॥

उदि दृणातेरलचौ पूर्वपदान्तलोपश्च ॥

उदि उपपदे दृणातेरल् अच् [2]इत्येतौ प्रत्ययौ भवतः ॥ [उदरम्[3]॥]

---

१. The words within brackets is omitted in the ms.

२. The ms. adds अप्.

३. The word within brackets is omitted in the ms.

## ॥ ६८७ ॥ डित् खनेर्मुट् चोदात्तः ॥ ५—१८ ॥

"खनु अवदारणे" अस्मादलचौ भवतः । धातोः मुडागमः । मुडागम उदात्तश्च भवति । उदात्तवचनसामर्थ्यात् मुडागमे उकारः श्रूयते । अन्यथा अनच्त्वादुदात्तविधानमनुचितम्, तस्याज्धर्मत्वात् । **मुखम्** आस्यम् ॥

---

## ॥ ६८८ ॥ हन्तेश्च द्वे ॥ ५—१९ ॥

हन्तेरलचौ भवतः द्वे शब्दरूपे द्वे वा आवृत्ती भवतः । हन्तेः "अभ्या-साच्च" इति कुत्वम् । हन्तीति **जघनं** कट्याः पूर्वो भागः ॥

---

## ॥ ६८९ ॥ अमेरसन् ॥ ५—२० ॥

अमेरसन्प्रत्ययः । अमति गच्छतीति **अमसः** । स्वरभेदात् पुनर्वचनम् । "अमिवचि" इत्यादिना असज्विहितः ॥

---

## ॥ ६९० ॥ मुहेः खो मूर् च ॥ ५—२१ ॥

"मुह वैचित्त्ये" अस्मात् खप्रत्ययः । धातोः मूरित्ययमादेशः । मुह्यतीति **मूर्खः** प्रमादी । धातोः विहितानामायन्नादयो न भवन्तीति पूर्वमेव प्रतिपादितम् ॥

---

[[1]डित् खनेर्मुट् स चोदात्तः] ॥

**डितौ [?] मुडागमश्च धातोः । स चोदात्तः । मुखं वक्त्रम् ॥**

हन्तेश्च द्वे ॥

**"हन हिंसागत्योः" अस्मात् अप्रत्ययः [?] द्विर्वचनं च । जघनं कटिस्थानम् ॥**

अमेरसच् [?] ॥

**अमेरसच्प्रत्ययो भवति । चकारः स्वरार्थः ॥ अमसः कालः व्याधिश्च ॥**

मुहेः खमुट् च ॥

**"मुह वैचित्त्ये" मुहेः खमुट्प्रत्ययो [?] भवति । मुम् इत्ययमादेशश्च मुद्खः [?] ॥**

---

1. The words within brackets are omitted in the ms.

॥ ६९१ ॥ नहेर्लोपश्च ॥ ५—२२ ॥

नहेः खप्रत्ययः धातोरन्त्यलोपश्च । नह्यतीति **नखः** कररुहम् । नास्य खमिति "नभ्राट्" इत्यादिना नञः प्रकृतिभावेन नलोपाभावेन नखसिद्धिः । तथापि स्वरभेदात् पुनर्व्युत्पादनम् । "नञ्सुभ्याम्" इति उत्तरपदान्तोदात्तत्वम् । तदेव खप्रत्ययान्तपक्षाविति[पक्षेऽपीति] ननु नास्ति स्वरे विशेषः । एवं तर्हि तस्यैव प्रपञ्चार्थमिदम् सूत्रम् ॥

---

॥ ६९२ ॥ महेश्च ॥ ५—२३ ॥

लोपश्चेत्येव । ख इति च ॥ "मह पूजायाम्" अस्मात् खप्रत्ययः । अन्त्यलोपः । **मखः** अध्वरः । "उख नख" इति मखसिद्धेरिदमपि प्रपञ्चार्थं सूत्रम् ॥

---

॥ ६९३ ॥ शीङो निद्ध्रस्वश्च ॥ ५—२४ ॥

शीङः खप्रत्ययः निच्च भवति, धातोरचो ह्रस्वश्च । ह्रस्ववचनसामर्थ्यान्न गुणः । **शिखा** चूडा ॥

---

॥ ६९४ ॥ शाखा ॥ ५—२५ ॥

---

ह्[ण]हेर्लोपश्च ॥

"णह बन्धने" णहेः अ[ख]प्रत्ययः लोपश्च । नखं करणम् ॥

महेश्च ॥

"मह पूजायाम्" महेः खप्रत्ययो लोपश्च । मखः अध्वरः ॥

शीङो निस्वश्च[निद्ध्रस्वश्च] ॥

"शीङ् स्वप्ने" शीङः खप्रत्ययो भवति निच्च ह्रस्वश्च । टाप् [शिखा[1]] चूडा । [[1]ह्रस्व]विधानसामर्थ्यात् गुणो [न[1]]भवति ॥

[शाखा ॥]

---

1. The words within brackets are omitted in the ms.

"शो तनूकरणे" अस्मात्खप्रत्ययो निपात्यते। **शाखा** वृक्षावयवः। "शाखृ श्लाखृ व्याप्तौ" इत्यस्मात् पचाद्यचि रूपसिद्धिः। स्वरेऽपि नास्ति विशेषः। य एवप्रत्ययस्वरः स एव "चितः" इत्यनेनेति ॥

---

## [॥ ६९५ ॥ [1]माङ ऊखो मय् च ॥ ५—२६ ॥]

[2]माङ ऊखो [मये् च। [3]मयूखः ॥] "उख णख" इति इगुपधलक्षणे के टापि उखा सिद्धा ॥

---

## ॥ ६९६ ॥ कलेः फगस्योच्च ॥ ५—२७ ॥

"कल विक्षेपे" अस्मात् फक्प्रत्ययः। अस्य अकारस्य उकारादेशश्च। तपरकरणं विस्पष्टार्थम्। भाव्यमानत्वादेव सवर्णग्रहणं न भविष्यति। कल्यते क्षिप्यतेऽनेनेति **कुल्फः** शरीरैकदेशः गतिश्च ॥

---

## ॥ ६९७ ॥ गलेश्च ॥ ५—२८ ॥

"गल अदने" अस्मात् फक्प्रत्ययः। अकारस्य च उकारादेशश्च। कित्करणमुकारादेशे कृते गुणो मा भूदिति। लाघवार्थमुकारादेशविधानं स्यात्। गल्यतेऽनेनेति **गुल्फः** शरीरैकदेशः ॥

---

**शाखाशब्दो निपात्यते। "शो तनूकरणे" खप्रत्ययः। टाप्। शाखा वृक्षावयवः ॥**

**कलेः फगस्योच ॥**

**कलेः फक्प्रत्ययः। उपधाया अकारस्य उकारः। कुल्फ शरीरैकदेशः ॥**

**गलेः फक् च ॥**

**गलेः फक्प्रत्ययः। [4]अकारस्योकारादेशः। गुल्फः ॥**

---

1. The words within brackets are omitted in the original.
2. The ms. adds वृक्षावयव आ च.
3. This word is omitted in the original.
4. The ms. adds गुल्फः

॥ ६९८ ॥ स्पृशेः श्वण्शुनौ पृ च ॥ ५—२९ ॥

"स्पृश संस्पर्शने" अस्मात् श्वण् शुन् इत्येतौ प्रत्ययौ भवतः । धातोः पृ इत्ययमादेशः । अनेकाल्त्वात् सर्वस्य । स्पृशति पार्श्वम् ॥ पर्शु अस्त्रविशेषः । पर्शुशब्दात् "अप्राणिजातेश्च" इत्यूङ् । पर्शूः । पर्शूनां समूहः पार्श्वमित्यपि साधु । णसः सित्त्वादोर्गुणाभावे यणादेशः ॥

---

॥ ६९९ ॥ श्मनि श्रयतेर्डुन् ॥ ५—३० ॥

श्मनि उपपदे श्रयतेः धातोः डुन्प्रत्ययः । यथाकथंचिदुपपदं परिकल्प्य व्युत्पत्तिः । श्मश्रु मुखजानि रोमणि ॥

---

॥ ७०० ॥ अश्र्वादयश्च ॥ ५—३१ ॥

"अशू व्याप्तौ संघाते च" डुन्प्रत्ययः रुडागमश्च प्रत्ययस्य निपात्यते । अश्रु बाष्पम् ॥ "असु क्षेपणे" डुन्रुडागमौ निपात्येते । अस्यत इति अस्रु तदेव ॥ कमेर्दकारः । पूर्ववत् डुन्रुडागमौ निपात्येते । काम्यत इति कद्रुः सर्पमाता ॥ डुच्प्रत्ययो निपातनात् । तथा चान्तोदात्तः प्रयोगो दृश्यते कद्रुरिति ॥ पिबतेः पद्रुः । अयं डुच्प्रत्ययान्तः ॥

---

**स्पृशेःश्वण्श्वनौ पृ च ॥**

**"स्पृश संस्पर्शने" स्पृशेः श्वण् श्वन् इत्येतौप्रत्ययौ । पृ इत्ययमादेशः णकारनकारौ स्वरार्थौ[?] । पार्श्वः शरीरावयवः ॥ पार्श्वः आयुधम् ॥**

**श्मनि श्रयतेर्डुन् ॥**

**"श्रिञ् सेवायाम्" श्रयतेः श्मउपपदे डुन्प्रत्ययो भवति । श्मश्रु[1] मुखलोम ॥**

**अश्र्वादयश्च ॥**

**"अश भोजने" असु क्षेपणे" "कमु कान्तौ" "पा पाने" डुन्प्रत्ययो भवति । क[रु]डागमश्च । अश्रु अस्रु चक्षुर्बलम् कद्रुः गमनशीलः ॥ पात[पद्रुः] रक्षिता[?] ॥**

---

1. The ms. adds. लोमश्च[च.]

॥ ७०१ ॥ जनेष्टन् नलोपश्च ॥ ५—३२ ॥

जनेष्टन्प्रत्ययो भवति । नलोपश्च प्रत्ययसन्नियोगेन भवति । जनयति पूजादिकमिति जटा केशसंघातः । नलोपे कृते अतो लोपो न भवति । आर्धधातुकोपदेशे योऽकारः तस्य लोपविधानात् टकारस्य "चुटू" इतीत्संज्ञा न भवति प्रयोजनाभावात् यादित्वाद्वा । किंयकारो न श्रूयते लुप्तनिर्दिष्टो यकारः । "जट झट संघाते" अस्मात् पचाद्यचि रूपस्य सिद्धत्वात् अनर्थकमित्याहुः ।

॥ ७०२ ॥ तस्य जङ्घ च ॥ ५—३३ ॥

तस्य जनेर्जङ्घ इत्ययमादेशः । "क्लिशेरप्" इति सूत्रादबित्यनुवर्तते अपि जङ्घादेशः । जङ्घा जानुः ॥

॥ ७०३ ॥ लूञो मनिन् ॥ ५—३४ ॥

"लूञ् छेदने" अस्मात् मनिन्प्रत्ययः । लूयत इति लोमन् । "नामन् सीमन्" इत्यादौ निपातितत्वादनर्थकमिदं सूत्रम् ॥

॥ ७०४ ॥ क्लिशेरन्ललोपश्च ॥ ५—३५ ॥

"क्लिश उपतापे" "क्लिशू विबाधने" द्वयोरपि ग्रहणम् । क्लिशेरप्-

---

जनेष्टन्नलोपश्च ॥

"जन जनने" जनेष्टन्प्रत्ययो भवति नलोपश्च । जटा केशसंघातः ॥

तस्मात् जङ्घ च ॥

जनेरेव धातोरप्रत्ययो भवति ॥ तस्य जङ्घ इत्ययमादेशो भवति । "अजाद्यतष्टाप्" इति टाप् । जङ्घा शरीरैकदेशः ॥

लूञो मनिन् ॥

"लूञ् छेदने" मनिन्प्रत्ययः । लोमानि तनूरुहाणि ॥

[[1]क्लि]शेरन् लोपश्च ॥

---

1. The ms. omits क्लि.

प्रत्ययः लकारस्य च लोपः । क्लिश्नातीति **केशः** शिरोरुहः । आर्धधातुकनिमित्तत्वं ललोपस्य नास्ति इति "न धातुलोप" इति गुणनिषेधो न भवति । न हि सन्नियोगशिष्टानां परस्परनिमित्तभावः यथा द्वयोः शृङ्गयोः युगपदुत्पद्यमानयोः ॥

## ॥ ७०५ ॥ हन्तेः शरीरावयवे द्वे च ॥ ५—३६ ॥

हन्तेरप्प्रत्ययः शरीरावयवेऽभिधेये तस्य हन्तेर्द्वे भवतः । **जघनं** कटिप्रदेशः । "हन्तेश्च द्वे" इति पूर्वमेव व्युत्पादितत्वादनर्थकमिदं इत्याहुः । स्वरभेदोऽपि नास्ति अलचोरसतोः प्रत्ययात् पूर्वस्यान्त्यस्य च उदात्तत्वसिद्धेः अप्यपि प्रत्ययात् पूर्वस्यैवोदात्तत्वं द्विरुक्ते धातुषु पररूपे स्वरव्यवस्थापि तत्वात् [?] ॥

## ॥ ७०६ ॥ फलेरितजादेश्च पः ॥ ५—३७ ॥

"फल निष्पत्तौ" अस्मादितच्प्रत्ययः फकारस्य पकारश्च । फलतीति **पलितं** पाण्डराः । "लोष्टपलितौ" इति निपातित्वादनर्थकमित्याहुः ॥

## ॥ ७०७ ॥ कृञादिभ्यः संज्ञायां वुन् ॥ ५—३८ ॥

कृञादिभ्यो धातुभ्यः संज्ञायां विषये वुन्प्रत्ययः । क्रियते पीयतेऽनेनेति **करकं** मद्यभाजनम् । तत्साधर्म्याज्जलभाजनं च ॥ चरतीति चरकं वाद्यम् ॥

---

"क्लिशू विबाधने" क्लिशेरन्प्रत्ययः नकारः स्वरार्थः । लकारस्य-लोपः ॥ केशाः मूर्धजाः ॥

हनेः शरीरावयवे द्वे च ॥

"हन हिंसागत्योः" शरीरावयवे गम्यमाने हन्तेरप्रत्ययो भवति । द्वे च कार्ये बहुव[द्विर्व]चनात् घत्वम् । जघनम् नितम्बम् ॥

फलेरितजादेश्च पः ॥

"फल निष्पत्तौ" फलेरितच्प्रत्ययो भवति । आदेश्च पः । चकारः स्वरार्थः पलितम् ॥

कृञादिभ्यः संज्ञायां वुन् ॥

"डु कृञ् करणे" "अभ्र मभ्र चर गत्यर्थाः" "वृञ् वरणे" एभ्यः

" वृञ् वरणे " वृणीते वरकः प्रार्थयिता ॥ " दॄ भये " दरकः सुवर्णकारः ॥ "नॄ नये" नरकं दैन्यगमकम् ॥ " कनी दीप्तिकान्तिगतिषु " कनतीति कनकं सुवर्णम् ॥ " कटे वर्षावरणयोः " कटकं वलयम् ॥ " चष क्षरणे [भक्षणे]" चषकं भाजनविशेषः ॥ " विट शब्दे " विटकः भाजनविशेषः । "बदरविटका " इति भाष्यम् ॥

---

## ॥ ७०८ ॥ जनेररठश्च ॥ ५—३९ ॥

" जनी प्रादुर्भावे " अस्मादरप्रत्ययः ठश्चान्तादेशः । जनयतीति **जठरं** उदरम् कठिनं च ॥

---

## ॥ ७०९ ॥ पचिवदिभ्यामिच्च ॥ ५—४० ॥

पचिवदिभ्यामरप्रत्ययः ठश्चान्तादेशः । अन्तादेशविधानसामर्थ्यादुपधाया इकारः । " अनन्त्यविकारे अन्त्यसदेशस्य इति " वा इकारविधानसामर्थ्यान्नगुणः । पच्यतेऽनेनेति **पिठरं** मृन्मयभाजनम् ॥ वदति परुषमिति **विठरः** मूर्खः ॥

---

## ॥ ७१० ॥ वचिमनिभ्यां चिद्वा ॥ ५—४१ ॥

" वच परिभाषणे " " मन ज्ञाने " आभ्यमरप्रत्ययः वा चिद्भवति ।

---

**संज्ञायां विषये वुन्प्रत्ययः । नकारः स्वरार्थः । "युवोरनाकौ" इति अकादेशः । करकः कुण्डिका ॥ चरकः शास्त्रं ऋषिश्च ॥ नरकः पापम् ॥ वरकः कन्यार्थी ॥ कनकः सुवर्णम् ॥**

**जनेर्डठरः ॥**

**"जनी प्रादुर्भावे" जनेर्डठरप्रत्ययो भवति । डकारष्टिलोपार्थः ॥ जठरम् उदरम् ॥**

**कटिवचविपविवचिमठरः ॥**

**आभ्यां चोत्तरस्याकारयकारः वृक्षः [?] ॥**

**वचिमनिभ्यां णिच्च ॥**

यदा चित् तदा अन्तोदात्तः । अन्यदा तु प्रत्ययस्वरः । वदतीति **वठरः** वज्रं कडारादिः ॥ मननात् **मठरः** ऋषिविशेषः ॥

---

## ॥ ७११ ॥ ऊर्जिदृणातेरलचौ पूर्वपदान्तलोपश्च ॥ ५—४२ ॥

ऊर्जि उपपदे दृणातेरलजित्येतौ प्रत्ययौ भवतः उपपदान्त्यलोपश्च । ऊर्जं दृणातीति "ङ्यापोः" इति बहुलग्रहणात् अङ्योऽपि ह्रस्वः । रेफलोपश्च । **उदराः उदलाः** राक्षसाः ॥

---

## ॥ ७१२ ॥ कृदरादयश्च ॥ ५—४३ ॥

कृदरादयो निपात्यन्ते । "कृती छेदने" तकारस्य दकारः । **कृदरः** हिंस्रः ॥ मृङः मृदरः मृत्युः ॥ श्रृणातेः रेफस्य बकारः । श्रृणातीति शबरः म्लेच्छः ॥ चमेः चमरः मृगविशेषः ॥ पदेर्वकारः । बदरः ॥ तृदरः ॥ अमेः अमरः ॥ कृपेः कर्परः ॥

---

## ॥ ७१३ ॥ हन्तेर्युजाद्यन्तयोर्घत्वतत्वे च ॥ ५—४४ ॥

---

**"वच परिभाषणे" ["मनु[1] अवबोधने"] आभ्यां डठरप्रत्ययो भवति वठरः मूर्खः ॥ मठरः ऋषिः ॥**

ऊर्जिदृणातेरचले[लचौ]द्वे पूर्वपदान्तलोपश्च ॥

**"दृ विदारणे" ऊर्जि उपपदे अल्‌अच् इत्येतौ प्रत्ययौ भवतः । ऊदरः [[1]ऊदलः]राक्षसः । स्वरकृतो विशेषः ॥**

कृदा[दरा]दयश्च ॥

**"कृतो छेदने" "मृङ् प्राणत्यागे" "श्रॄ हिंसायाम्" एभ्यः अरच्प्रत्ययो निपात्यते । गुणाभावः । तकारस्य दकारः । कृदरः हिंस्रः ॥ मृदरः जनः । बहुलवचनात् रेफस्य लकारः [[1]मृदलः] म्लेच्छः ॥ "चम भक्षणे" चमरः मृगविशेषः ॥ बदरः कुवलम् ॥**

हन्तेर्युजाद्यन्तयोर्घत्वतत्वे च ॥

---

1. The word within brackets is omitted in the ms.

हन्तेः युच्प्रत्ययः। आद्यन्तयोः यथासंख्यं गत्वतत्वे भवतः। हन्तीति **घतनः** बह्वाशी ॥

---

## ॥ ७१४ ॥ क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥ ५—४५ ॥

"क्रमु" "गमॢ" "क्षमूष् सहने" एभ्यस्तुन्प्रत्ययः। वृद्धिश्च एषामचः स्थाने भवति। **क्रान्तुः** प्रेक्षणिकः ॥ गच्छतीति **गान्तुः** पथिकः ॥ क्षमते इति **क्षान्तुः** पिता। तुन्प्रकरणे वृद्धौ विधातव्यायाम् इहप्रकरणे विधान-मनर्थकम् ॥

---

## ॥ ७१५ ॥ गुहः कन् ॥ ५—४६ ॥

"गुहू संवरणे" अस्मात्कन्प्रत्ययः। ककारो गुणो मा भूदिति ॥ गुणे च "ऊदुपधाया गोह" इति ऊकारः स्यात्। तथा च गुह इति रूपं न-सिद्ध्येत्। गूहति संवृणोति शत्रून् पराक्रमाधिक्यादिति **गुहः** कार्तिकेयः। गुहेरिके रूपं सिद्ध्यति। स्वरस्तु न सिद्ध्यति। तदर्थमिदं सूत्रम् ॥

---

## ॥ ७१६ ॥ करोतेर्द्वे च ॥ ५—४७ ॥

करोतेः धातोः कन्प्रत्ययः द्विर्वचनं च भवति धातोः। करोतीति **चक्रं** आयुधविशेषः ॥ के द्विर्वचने च यणादेशः। "कृञादीनां के द्वे भवतः" इति

---

हन्तेर्युच्प्रत्ययः आद्यन्तयोः घत्वतत्वे च भवतः। चकारः स्वरार्थः। घतनः बह्वाशी ॥

क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥

"क्रमु पादविक्षेपे" "गम्लृ सृप्लृ गतौ" "क्षमूष्सहने" एभ्यस्तुन्प्रत्ययो भवति वृद्धिश्च। नकारः स्वरार्थः। क्रान्तुः प्रेक्षणिकः ॥ गान्तुः पथिकः ॥ क्षान्तुः पिता ॥

गुहेः कन् ॥

"गुहू संवरणे" गुहेः कन्प्रत्ययो भवति। ककारः कित्कार्यार्थः। गुहः कार्तिकेयः ॥

करोतेः को[के]द्वे च ॥

वार्तिकम् । "घञर्थे कविधानम्" इति केचित् । द्विर्वचनार्थं च । ननु च परिगणनं तत्र कृतम् "घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्" इति । न च कृञादिः तत्र परिगणितः । नैष दोषः । परिगणनं भाष्ये प्रत्याख्यातम्, "संख्याया विधार्थे धा" इत्यत्र विपूर्वाद्धाञोऽपि कप्रत्ययं दर्शयता भाष्यकारेण । इदं तु सूत्रं वुनि द्विर्वचनार्थम् । यद्यपि के वुनि च रूपं समानं स्वरस्तु भिद्यते ॥

---

## ॥ ७१७ ॥ विषेर्व्याप्तिकर्मणि ॥ ५—४८ ॥

कर्मशब्दः क्रियावाची, धातुवाच्यत्वे[त्वेन] क्रियायाः प्रत्यासत्तेः, न त्वीप्सिततमं विपर्ययात् । व्याप्तिक्रियायां वर्तमानादित्यर्थः । मनुष्यगजतुरगाः[?] शरीरं व्याप्नोतीति विषं हालाहलम् । ननु "विषॢ व्याप्तौ" एव पठ्यते । नैतदेवं चौरादिकोऽप्यस्ति "विष विप्रयोगे" इति । अतस्तस्मान्मा भूदिति व्याप्तिकर्मणीत्युच्यते । एवमपि संज्ञाग्रहणादुणादिसूत्रे व्याप्तावेव भविष्यति । एवं तर्हि तस्यैव प्रपञ्चार्थम् "घञर्थे कविधानम्" इति वा इगुपधलक्षणे वा कप्रत्यये रूपे सिद्धे स्वरार्थं प्रत्ययान्तरविधानम् ॥

---

## ॥ ७१८ ॥ हर्यतेः कन्यन् हिरश्च ॥ ५—४९ ॥

"हर्य गतिकान्त्योः" भौवादिकः । तस्मात् कन्यन्प्रत्ययः । तत्सन्नियोगेन धातोः हिर इत्ययमादेशः । ककारो गुणनिषेधाय । हर्यति गच्छतीति **हिरण्यम्** सुवर्णम् ॥

---

**"डु कृञ् करणे" करोतेः कप्रत्ययो भवति । द्वे चास्य कार्ये भवतः । चक्रं सुदर्शनम् ॥**

विषेर्व्याप्तिकर्मणि ॥

**"विषॢ व्याप्तौ" विषेः कप्रत्ययः व्याप्तिकर्मणि गम्यमाने । विषं के । हालाहलम् ॥**

[हर्यतेः कन्यन् हिरश्च ॥][1]

**हर्यतेः क्य[कन्य]न्प्रत्ययः । नकारः स्वरार्थः । ककारः कित्कार्यार्थः । हिर इत्ययंचादेशः । हिरण्यं सुवर्णम् ॥**

---

1. This sūtra is omitted in the original.

॥ ७१९ ॥ कृञः पासः ॥ ५—५० ॥

करोतेः पासप्रत्ययः । करोतीति **कर्पासः** वृक्षविशेषः ॥

---

॥ ७२० ॥ कठिचकिभ्यामोरः ॥ ५—५१ ॥

"कठ कृच्छ्रजीवने" "चक तृप्तौ प्रतीघाते च"। आभ्यामोर-प्रत्ययः । कठतीति **कठोरः** कर्कशः ॥ चकते **चकोरः** पक्षिविशेषः ॥ "कठि-चकिभ्यामोरच्" इति पूर्वमेव पठितत्वादनर्थकमिदं सूत्रम् ॥

---

॥ ७२१ ॥ जनेस्तो रश्च ॥ ५—५२ ॥

जनेस्तप्रत्ययः, रेफश्चान्तादेशः । जनयतीति **जर्तः** योनिः रोम च ॥

---

॥ ७२२ ॥ डनट् च ॥ ५—५३ ॥

जनेरित्येव । जनेर्डन्प्रत्ययः धातोः अडागमश्च । जायत इति **अजः** पशु-विशेषः । स्त्रियामजादित्वाज्जातिलक्षणं ङीषं बाधित्वा टाप् अजा न जायत इत्यज इति "अन्येष्वपि दृश्यते" इति डप्रत्ययेन यद्यपि स्वरूपं सिद्धं तथाप्यर्थानुगमा-भावात् पुनर्व्युत्पादनम्; संज्ञाशब्दानामपि विद्यमानार्थोपपादेनैव व्युत्पत्तिर्व्याख्या । यत्र तु सर्वात्मना अर्थानुगमो नास्ति तत्रैवासदर्थाश्रयणं यथा तैलपायिकादौ ॥

---

॥ ७२३ ॥ ऊर्णोतेर्डः ॥ ५—५४ ॥

---

[कृञः पासः ॥]

**कृञा[ञः]पासप्रत्ययो भवति । कर्पासः । सस्य [?] ॥**

**जनेस्तो रः ॥**

**जनेस्तप्रत्ययः, रेफश्चान्तादेशः । जर्तः आभीरः योनिः कामश्च ॥**

॥ उश्च [डनट् च] ॥

**जनेरेव धातोः डन्प्रत्ययो भवति । अडागमश्च धातोः । डित्वा-ट्टिलोपः । अजः छागः ॥**

॥ ऊर्णोतेश्च ॥

ऊर्णोतेः डप्रत्ययः । डित्वादभस्यापि टिलोपः । स्त्रियामभिधानं यदुक्तं स्थूणा [ऊर्णा] इति अस्यायमर्थः—स्थूणा ऊर्णा इत्येते स्त्रियां साधू भवतः । ऊर्णा छागलोम ॥

---

## ॥ ७२४ ॥ दधातेर्यत् नुट् च ॥ ५—५५ ॥

दधातेर्यत्प्रत्ययः, प्रत्ययस्य च नुडागमः । दधातीति धान्यं माषादि । "धान्ये नित्" "धान्यानाम्" इति निपातनं तत्र स्वरितत्वम्; इतरथा "यतोऽनावः" इति द्व्यच्त्वादनुदात्तः स्यात् । एकश्रुत्या सूत्राणां पाठः इति पक्षे स्वरितत्वे य........कर्तव्ये[?] । केचित् "धन धान्ये" इत्यस्मात् छान्दसोऽपि "धान्यानाम्" इति निपातनात् भाषायामपि ण्यतं कुर्वन्ति । तेषां ण्यदतत्वात् तित्वात् स्वरितत्वं सिद्ध्यति । अन्ये "धिवि प्रीणने" इत्यस्मात् ण्यतमिच्छन्ति । धिनोति प्रीणयतीति धान्यमिति । तेषामपि "चमेषु यत् पठ्यते न तदेव धान्यम्" इति भाष्यकारनिर्देशादिकारस्य आकारोऽङ्गीकर्तव्यः । अपरे धाने साधु धान्यमिति साध्वर्तीयतः [साध्वर्थेयतं] कृत्वा धान्यमिति साधयन्ति । ते "यस्य" इति लोपस्य पूर्वस्मादुत्तरस्य विधावपि क्वचित् स्थानिवद्भावस्येष्टत्वात् स्थानिवद्भाव [वाद्व्यच्त्वा] भावादन्तस्वरितत्वमाहुः ॥

---

## ॥ ५२५ ॥ जीर्यतेः किन्रश्च पुग्वा ॥ ५—५६ ॥

"जॄष् वयोहानौ" अस्मात् किन्प्रत्ययो भवति । ककारो गुणनिषेधाय । तकारः स्वरार्थः । इकारमात्रं प्रत्ययः । रश्च वुग्वा भवति । जॄणातीति जीर्विः कालः ॥

---

ऊर्णोतेः डप्रत्ययः । ऊर्णा आप[अज] लोमानि ॥

॥ भधातेर्य[दधातेर्यः]नुट् च ॥

"डु धाञ् धारणपोषणयोः" दधातेर्यप्रत्ययः नुमा[नुडा]गमश्च । धान्यं व्रीह्यादि ॥

जीर्यतेः क्रिन् रश्च वः ॥

जीर्यतेः क्रिन्प्रत्ययः । ककारः कित्कार्यार्थः । "ऋत इद्धातोः" इकारो रपरः । "हलि च" इति दीर्घः । जीर्विः कालः कोपश्च ॥

॥ ७२६ ॥ मव्यतेर्यलोपो मश्चापोऽप्तुट् चालः ॥ ५—५७ ॥

"मव्य बन्धने" अस्मादालप्रत्ययो भवति, यलोपश्च । प्रत्ययस्य अप्तुडागमः । वकारस्य मकारश्च "अलोऽन्त्यस्य" इति । मव्यतीति ममप्तालः शब्दादिविषयः ॥

॥ ७२७ ॥ ऋजेः कीकन् ॥ ५—५८ ॥

"ऋज गतिस्थानार्जनोपार्जनेषु" अस्मात् कीकन्प्रत्ययो भवति । अर्जतीति ऋजीकः ऋषिविशेषः । "ऋजेः किच्च" इति ईकन्प्रत्ययप्रकरणे एव वक्तव्ये इह कीकन् विधानं विस्पष्टार्थम् ॥

॥ ७२८ ॥ अर्भकपृथुकपाका वयसि ॥ ५—५९ ॥

"अर्ह पूजायाम्" अकन्प्रत्ययः । हकारस्य भकारः । अर्भकः बालः ॥ "प्रथ प्रख्याने" अस्मादुकन्प्रत्ययः संप्रसारणं च । पृथुकः स एव ॥ "डु पचष् पाके" अन्त्यलोपः कन्प्रत्ययः आकारश्च निपात्यते । पाकः बालः ॥ "इण्भीकापाशल्यति" इति कन्प्रत्ययान्तः पाकशब्दो व्युत्पादितः । शक्यं पाकग्रहणमनर्थकम् ॥

---

॥ मव्यतेर्यलोपश्चाप्तुट्चालः ॥

"मव्य बन्धने" अस्मादास[ल]प्रत्ययो भवति यकारलोपः अप्तुडागमश्च । मपातालः [ममापतालः] शब्दादिविषयः ॥

ऋजेः कि[की]कन् ॥

ऋजेः कि[की]कन्प्रत्ययः । नकारककारौ स्वरकृद[स्वरा]र्थौ । ऋजीकः ऋषिः ॥

॥ अर्भकपृथुकपाका वयसि ॥

"ऋ गतौ" "प्रथ प्रख्याने" "डु पचष् पाके" अर्तेः कन्प्रत्ययः वयसि गम्यमाने । अर्भकः बालः ॥ प्रथेः संप्रसारणमुकप्रत्ययश्च निपात्यते । [¹पृथुकः ॥] चकारकस्य कारादेशः । पाकः सराभक्षणं च ॥

---

1. The word within brackets is omitted in the ms.

## ॥ ७२९ ॥ अवद्यावमार्वाः कुत्सिते ॥ ५—६० ॥

अवद्यादयः कुत्सिते निन्दिते वाच्ये निपात्यन्ते । वदेर्नञ्पूर्वाद्यत् । अवद्यं अवदनार्हं कुत्सितम् ॥ अवतेरमप्रत्ययः अवमम् ॥ "ऋ गतौ" वप्रत्ययः । अर्वः तदेव कुत्सितम् ॥ वन्देर्नञ्पूर्वस्यावद्येति निपातनादवद्यं सिद्धम् । तथापि अवः अधः भवादितद्धितार्थे अवोधसोर्लोपश्चेति "मध्यान्मः" इत्यत्र व्युत्पादितोऽवमशब्दः । अर्थोऽपि समान एव । अवममिति तावत् गर्ह्ये कुत्सिते निपातितः अवोऽधस्तात् भवमवमम् । यच्च अधस्तात् भवमवतः प्रायेण कुत्सितमिति तस्मात् प्रपञ्चार्थमनयोः निपातनम् ॥

---

## ॥ ७३० ॥ चतेरुरन् ॥ ५—६१ ॥

"चते चदे याचने" अस्मदुरन्प्रत्ययः । चतुर् संख्यावाची ।

---

## ॥ ७३१ ॥ लीङ्रीङोर्ह्रस्वश्च पुट्तरौ श्लेष्मकुत्सनयोः ॥ ५—६२ ॥

लीरीभ्यां यथासंख्यं तरौ भवतः । प्रत्यययोः पुडागमः । धात्वोर्ह्रस्वः श्लेष्मकुत्सनयोः वाच्ययोः । लीयत इति लिप्तं श्लेष्म ॥ रिप्रं कुत्सितम् । रिहेः देहार्थात् [निन्दार्थात्] क्रप्रत्यये यद्यपि रूपं सिद्ध्यति अर्थस्तु न सिद्ध्यति तदर्थं ग्रहणम् ॥

---

॥ अवद्याप[व]मार्वरेफार्थादकुत्सिते ॥

"वद व्यक्तायां वाचि" "अव रक्षणे" "ऋ गतौ" "रिफ रिप हिंसार्थाः । अवदेर्यत्प्रत्ययो वादेश्च [?] निपात्यते । अवद्यः कुत्सितः । अवतेरप्रत्ययो भवति । अपर्व इत्ययमादेशः [?] । अवतेरप्रत्ययो वादेशश्च [?] निपात्यते अर्वन्तः देव रिफेरप्रत्ययः [?] ॥

लीङ्रीङोस्तरौ पुङ्[ट्]ह्रस्वश्च श्लेषणकुत्सनयोः ॥

"लीङ् श्लेषणे" "रीङ् गतौ" अभ्यां तरा इत्येतौ प्रत्ययौ भवतः ह्रस्वश्च । धात्वोः पुडागमः यथासंख्यं श्लेषणकुत्सनयोः । लिप्तं श्लिष्टम् ॥ रिप्रं कुत्सितम् ॥

## ॥ ७३२ ॥ क्लिशेरी चोपधायाः कन् लोपश्च लो नाम् ॥ ५—६३ ॥

"क्लिशू विबाधने" "क्लिश उपतापे" द्वयोरपि ग्रहणं विशेषानुपादानात् । क्लिशेः कन्प्रत्ययः । ककारः कित्कार्यार्थः । उपधायाः ईकारः लकारस्य च लोपः ततो नामागमः । मकारो "मिदचोन्त्यात् परः" इति अचामन्त्ये यथा स्यादिति । क्लिश्नाति बाधत इति कीनाशः यमः । "विधेहि कीनाशनिकेतनातिथिम्" इति माघः ॥

---

## ॥ ७३३ ॥ अश्नोतेराशुकर्मणि वरट् च ॥ ५—६४ ॥

अश्नोतेः वरट्प्रत्ययः आशुकर्मणि शीघ्रप्रवृत्तौ गम्यमानायाम् । उपधाया ईकार इत्यनुवर्तनात् उपधाया ईकारश्च । ईश्वरः आप्नोति कर्तव्यमिति कृत्वा । टित्त्वात् ङीप् ईश्वरी । तथा च वैदिकप्रयोगः "ईश्वरीपदार्थानाम् [ईश्वरीं सर्वभूतानाम्]" इति । "स्थेशभास" इति वरचा सिद्धे स्तिचां [स्त्रियां] ङीबर्थं वरड्विधीयते । अर्थोऽपि सदृश एव । वरचि ईश्वरा इति रूपम् । तथा च भारवीये प्रयोगः "विन्यस्तमङ्गलमहौषधिरीश्वराया स्स्तोरगप्रतिसरेण करेण पाणिः" इति । ईश्वरायाः ईशनशीलायाः न त्वीश्वरभार्यायाः ॥

---

## ॥ ७३४ ॥ आप्नोतेः क्विब्ह्रस्वश्च ॥ ५—६५ ॥

---

**॥ क्लिशेरी चोपधायाः कन् लोपश्च नाम् ॥**

"क्लिशू विबाधाने" क्लिशेः कन्प्रत्ययः उपधाया ईकारादेशश्च । लकारस्य लोपो नामागमः । कि[की]नाशः वैद्यः कृपणश्च ॥

**॥ अश्नोतेराशुकर्मणि वरट् च ॥**

अशेर्वरट्प्रत्ययो भवति आशुकर्मणि गम्यमाने । उपधायाश्च ईकारादेशः । कृत्स्नमाशु प्राप्नोति इति ईश्वरः शिवः स्वामी । ईश्वरी गौरी ॥

**दे[द]हेर्गो लोपो दयश्च [दस्य च] नः ॥**

"दह भस्मीकरणे" देहेर्गप्रत्ययः, अन्त्यलोपश्च । दकारस्य स्थाने नकारादेशः । नगः पर्वतः ॥

"आपॢ व्याप्तौ" अस्मात् क्विप्प्रत्ययः तत्सन्नियोगेनाचो ह्रस्वो भवति। आप्यते आप्नोतीति वा अप्। एकस्यां जलकणिकायां अप्शब्दो बहुवचनान्तः। आपः जलम्॥

॥ ७३५ ॥ अपि सर्तेरसिन् ॥ ५—६६ ॥

अपि उपपदे सर्तेरसिन्प्रत्ययः। अप सरतीति अप्सराः देववेश्या॥

"अश्नोतेराशुकर्मणि" इत्यस्यानन्तरम् "दहेर्ग[ग]लोपो दश्च न" इति केचित्सूत्रं पठन्ति। तस्यायमर्थः। "दह भस्मीकरणे" अस्मात् गप्रत्ययः अन्त्यलोपः दकारस्य च नकार इति। नग इत्युदाहरणम् "तत्तनगो प्राणिष्वन्यतरस्याम्" इति नगशब्दस्य सिद्धत्वादनर्थकमित्याहुः॥

॥ ७३६ ॥ सिचेः संज्ञायां कन्नुंहौ च ॥ ५—६७ ॥

"षिच क्षरणे" अस्मात् कन्प्रत्ययः। ककारः कित्कार्यार्थः। नुमागमः। अन्त्यस्य च हकारः। सिञ्चतीति सिंहः मृगेन्द्रः॥ हिनस्तीति सिंहः। पचाद्यचि पृषोदरादित्वादाद्यन्तविपर्यये सिंहसिद्धिः। तथा चान्तोदात्तः प्रयोगः।

॥ ७३७ ॥ व्याङि घ्रातेश्च जातौ ॥ ५—६८ ॥

"घ्रा गन्धोपादाने" व्याङि उपपदे तस्मात्कन्प्रत्ययः जातौ वाच्यायाम्। व्याजिघ्रतीति व्याघ्रः द्वीपी। अयमपि योगः शक्यो वक्तुम्

---

॥ अमिसर्तेरसुः॥

"अम रोगे" "सृ गतौ" आभ्यायसुन्प्रत्ययो भवति। अमसः रोगः॥ सरसः ह्रदः॥

सिचेः संज्ञायां क्रणहनम[कन्नुं हौ च]॥

"षिच क्षरणे" सिचेः संज्ञायां विषये कन्प्रत्ययः। नुंह्कारादेशौ भवतः। नकारककारौ स्वरक्रिदर्थौ [रार्थौ] सिंहः केसरी॥

व्याघ्रातेश्च॥

" पाघ्राध्माधेट् दृशः शः " " जिघ्रतेस्संज्ञायां प्रतिषेधः " इति वार्तिके शप्रत्ययो भावे सिद्धत्वाघ्वाघ्र[त् व्याघ्र]शब्दस्यान्तोदात्तस्य दर्शनात् आद्युदात्तस्य च क्वचिद्विद्यमानत्वात् स्वरव्यत्ययस्य सर्वथा वक्तव्यत्वात् ॥

---

॥ ७३८ ॥ छापूङ्खडिभ्यो गक् ॥ ५—६९ ॥

" छो छेदने " " पूङ् पवने " " पूञ् पवने " वा । " खड खडि भेदने " एभ्यो गक्प्रत्ययः । ककारः पवतेर्गुणाभावार्थः । **छागः** बस्तः ॥ **पूगः** वणिक्प्रभृतीनां समूहः ॥ खाडयति भिनत्तीति, अनित्यत्वाच्चुरादि क्षिचः [णिचः] केवलाद्गक् । **खड्गः** असिः ॥

---

॥ ७३९ ॥ हन्तेर्घुरच् ॥ ५—७० ॥

हन्तेः घुरच्प्रत्ययः बाहुलकान्नकारलोपः घत्वं च । **घोरः** भयानकः । " घुर भीमार्थशब्दयोः" इति पचाद्यचि यजि रूपे सिद्धे प्रपञ्चार्थमिदं सूत्रम् ॥

---

॥ ७४० ॥ ग्रहेरणिः ॥ ५—७१ ॥

ग्रहेरणिप्रत्ययः । **ग्रहणिः** व्याधिविशेषः ॥

---

॥ ७४१ ॥ तनोतेः डउः सन्वच्च ॥ ५—७२ ॥

---

जातौ गम्यमानायां व्याघ्रः श्वापदः ॥

छापूञ्खनिभ्यो गक् ॥

" छो छेदने " " पूञ् पवने " " खनु अवदारणे " एभ्यो गक्प्रत्ययः । छागः अजः ॥ पूगः क्रमुकः समूहश्च ॥ खगः पक्षी ॥

हन्तेर्घुरच् ॥

अस्माद्रच्प्रत्ययः । घु इत्ययमादेशः घोरं दार........[दारुणम्] ॥

ग्रहेरणिः ॥

" ग्रह उपादाने " अणिप्रत्ययः । ग्रहणिः रोगः ॥

"तनु विस्तारे" अस्मात् डउप्रत्ययः । तस्मिन् सनीव कार्यम् । सन्वद्भावात् द्विर्वचनम्, "सन्यतः" इतीत्वं च । तनोति शोधयतीति तितउः उपरिप्लवनम् । तुन्नवद्वा विततवद्वा भवति ॥

---

॥ ७४२ ॥ प्रथेरमच् ॥ ५—७३ ॥

"प्रथ प्रख्याने" अस्मादमच्प्रत्ययः । प्रथमं मुखम् ॥

---

॥ ७४३ ॥ चरेश्च ॥ ५—७४ ॥

चरेश्च अमच्प्रत्ययः । चरमं अन्त्यम् ॥

---

॥ ७४४ ॥ अर्तेर्भुक्षिन् ॥ ५—७५ ॥

"ऋ गतौ" अस्मात् भुक्षिन्प्रत्ययः । बाहुलकात् गुणाभावः । ऋभुक्षाः इन्द्रः ॥

---

॥ ७४५ ॥ मघेरच् नलोपश्च ॥ ५—७६ ॥

"मघि कैतवे" अस्मादच्प्रत्ययः नकारलोपश्च । मघा नक्षत्रम् ॥

---

॥ ७४६ ॥ खनेर्डलः ॥ ५—७७ ॥

खनेर्डलप्रत्ययो भवति । डकारष्टिलोपार्थः । खनतीति खलः दुर्जनः । "खल सञ्चलने" अस्मात् खल्यतेऽनेनेति पुंसि संज्ञायां घे सिद्ध्यतीत्यनर्थकमिदम् ॥

---

॥ प्रथेरमच् ॥

"प्रथ आख्याने" प्रथेरमच्प्रत्ययः । प्रथमः पूर्वः ॥

॥ चरेश्च ॥

चरेरमच्प्रत्ययः । चरमं जघन्यम् ॥

[॥ पुरश्च ॥][1]

[पॄधातोरपि अमच्] प्रत्ययः । परमम् उत्कृष्टम् ॥

---

1. The words within brackets are omitted in the ms.

## ॥ ७४७ ॥ गविगन्धृङो वः ॥ ५—७८ ॥

"धृङ् अवस्थाने" अस्मात् गवि उपपदे वप्रत्ययः । उपपदस्य गनादेशः । **गन्धर्वः** यथाकथंचित् व्युत्पत्तिः ॥ [अस्यानन्तरम् "किमि ललेरण् की च" इति] किंशब्द उपपदे "लल ईप्सायाम्" अस्मादण्प्रत्ययः । किमः कीभावः । धातोरुपधाया वृद्धिः । कीलालः इति केचित्साधयन्ति ॥

---

## ॥ ७४८ ॥ दन्भेः सीकन् मक् च ॥ ५—७९ ॥

दन्भेः सीकन्प्रत्ययः । धातोर्मगित्यादेशः । **मक्षिका** क्षुद्रजन्तुविशेषः ॥

---

## ॥ ७४९ ॥ दिवेर्डिविः ॥ ५—८० ॥

दिवेः डिविप्रत्ययः । दीव्यत्यस्मादिति **द्यौः** स्वर्गः ॥

---

## ॥ ७५० ॥ मङ्गेरलच् ॥ ५—८१ ॥

मगिः गत्यर्थः [इदित्वात्] नुम् । तस्मान्मङ्गेरलच्प्रत्ययः । मङ्गतीति **मङ्गलम्** कल्याणम् । सूत्रेणैव मङ्गलमिति रूपस्य गम्यमानत्वात् शास्त्रपरिसमाप्तिसमये मङ्गल............रम् [मङ्गलं न पृथक् कृतम्] ॥

इतीन्दुग्रामसमीपवर्त्यग्रहारवास्तव्येनोत्तरमेर्वभिजनेन धर्मशास्त्रपारगार्यभट्टसूनुना गार्ग्येण श्वेतवनवासिनाम्ना विरचितायामुणादिवृत्तौ पञ्चमः पादः ॥

॥ समाप्तेयं पञ्चपादी ॥

---

॥ दिवेर्डिविः ॥

**"दिवु क्रीडादौ" दिवेः डिविप्रत्ययः । डित्वाट्टिलोपः । द्यौ स्वर्गः ॥**

॥ मङ्गेरलच् ॥

**"अहि वहि महि गत्यर्थाः"[?]मङ्गेरलच्प्रत्ययः । चकारः स्वरार्थः । मङ्गलम् ॥**

---

1. Space in left out for witing these words in the ms.

## अवतेः विड्लोपो दीर्घश्च वा ॥ १ ॥

अवतेः धातोः विट्प्रत्ययो वकारलोपो दीर्घश्च वा भवति । अ आ ॥

## इष्युषिभ्यां क्विब्व्यञ्जनलोपश्च ॥ २ ॥

"इषु इच्छायाम्" "उष दाहे" आभ्यां क्विप्प्रत्ययो भवति व्यञ्जनलोपो दीर्घश्च वा स्यात् । इ ई उ ऊ ॥

## अर्तिकिरत्योः कलोपश्च ॥ ३ ॥

"ऋ गतौ" "कॄ विक्षेपे" अनयोर्धात्वोः क्विप्प्रत्ययो भवति कलोपश्च । ऋ ॠ ॥

## तयोरेव लृः ॥ ४ ॥

तयोरेव धात्वोः ऋ ॠ इत्येतयोः लृकारादेशो भवति । लृ ॡ ॥

## इणो गुणवृद्धी ॥ ५ ॥

"इण् गतौ" अस्माद्धातोः क्विप्प्रत्ययो भवति । गुणवृद्धी यथाक्रमेण भवतः । ए ऐ ॥

## ऊहेर्व्यञ्जनलोपश्च ॥ ६ ॥

"ऊह वितर्के" अस्माद्धातोः क्विप्प्रत्ययो भवति, गुणवृद्धी व्यञ्जनलोपश्च । ओ औ ॥

## अमेर्मुसौ ॥ ७ ॥

"अम रोगे" अस्माद्धातोः मुस इत्येतौ प्रत्ययौ भवतः व्यञ्जनलोपश्च । अं अः ॥

## कनिगमिघसिङुङ्भ्यो डः ॥ ८ ॥

"कनी दीप्तौ" दण्डकधातुः । "खनु अवदारणे" "गमॢ गतौ" "घस्लृ अदने" "खुङ् गुङ् घुङ् ङुङ् शब्दे" एभ्यो धातुभ्यो डप्रत्ययो भवति । क ख ग घ ङ ॥

## चमिछमिजन्युञ्झिभिदेरुजलोपो ञि च ॥ ९॥

"चमि छमि जनि उञ्झि भिदि" इत्येतेभ्योऽम्प्रत्ययो भवति। उञ्झेः उकारजकारयोः लोपः। भिदेः ञकारादेशश्च। च छ ज झ ञ॥

## ट्वलिठ्वलिड्वलिढौकृपणिभ्यो वपलोपश्च ॥ १० ॥

"ट्वलि ठ्वलि ड्वलि" दण्डकधातुः। "ढौकृ दर्शने" "पण व्यवहारे" एभ्यो डप्रत्ययो भवति, वपलोपश्च। ट ठ ड ढ ण॥

## तमिथुड्दमिधनिणमिभ्यश्च ॥ ११ ॥

"तमु ग्लाने" "थुड त्रुट्वने" "दम दमने" "धन धान्ये" "णम प्रह्वत्वे" "णो न" इति नत्वम्। एभ्यो धातुभ्यो डप्रत्ययो भवति। त थ द् ध न॥

## पतिफक्किबृहिभृञ्मृङ्भ्यश्च ॥ १२ ॥

"पा रक्षणे" "फक्क नीचैर्गतौ" "बृह बृहि वृद्धौ" "डु भृञ् धारणे" "मृङ् प्राणत्यागे" एभ्यो धातुभ्यो डप्रत्ययो भवति। प फ ब भ म॥

## यातिरातिलातिवातिभ्यश्च ॥ १३ ॥

"या प्रापणे" "रा आदाने" "ला आदाने" "वा गतिगन्धनयोः" एभ्यो डप्रत्ययो भवति। य र ल व॥

## शमिमुषिस्यतिहाभ्यो मुलोपश्च ॥ १४ ॥

"शमु उपशमने" "मुष खण्डने" "षो अन्तकर्मणि"। "धात्वादेः षः सः" इति सत्वम्। "ओ हाक् त्यागे" एभ्यो धातुभ्यो डप्रत्ययो भवति मुलोपश्च। श ष स ह॥

## कायतिपिबत्योः ᳵकᳵपौ च ॥ १५ ॥

"कै गै शब्दे" "पा पाने" आभ्यां धातुभ्यां डप्रत्ययो भवति, तत्सन्नियोगेन ᳵ कᳵप इत्यादेशौ भवतः॥

इत्यौणादिकं शास्त्रं साङ्गोपाङ्गं समाप्तम्॥

---

# INDEX OF

WORKS AND AUTHORS REFERRED TO

# INDEX OF QUOTATIONS

| QUOTATION. | PAGE. | SOURCE. | |
|---|---|---|---|
| अतिलूधूसु | 190 | Pāṇini | IV-ii-184. |
| अर्थवत् | 2, 31 | Pāṇini | I-ii-45. |
| अर्भकपृथुक | 110 | Uṇādi Sūtra | V-59. |
| अवृत्कृतत्वात् | 128 | Dhātupārāyaṇa | |
| अशोर्भगे | 204 | Uṇādi Sūtra | IV-196. |
| अष्टका पितृ- | 134 | Vārtika | VII-iii-45. |
| अस्ति मत्स्यः | 173 | Mahābhārata | |
| अहिरन्तोदात्तः | 178 | Vṛtti. | |
| आतोनुपसर्गे | 54 | Pāṇini | III-ii-3. |
| आतो युक् | 2 | Pāṇini | VII-iii-33. |
| आतो लोपः | 14, 19, 25, 211 | Pāṇini | IV-iv-64. |
| आदीदूतः | 36. | Harṣavardhana Liṅgānuśāsana | p. 4. |
| आदेश | 2 | Pāṇini | VIII-iii-51. |
| आयादयः | 39 | Pāṇini | III-i-31. |
| आर्धधातुके | 115 | Pāṇini | VI-iv-46. |
| आशिरा दम्पती | 24 | T. Saṁhitā | III-ii-8-4. |
| आश्वापतव्यः | 22 | Mahābhāṣya | I. 250. |
| इको वक्तव्यः | 74 | Mahābhāṣya | II-156. |
| इणजादिभ्य | 175 | Vārtika | III-iii-108. |
| इन्द्रियमिन्द्र | 33 | Pāṇini | V-ii-91. |
| इन् सर्वधातुभ्यः | 171, 279 | Uṇādi Sūtra | IV-126. |
| इस्मन्त्र | 93, 185 | Pāṇini | VI-iv-97. |
| उगितश्च | 84 | Pāṇini | IV-i-6. |
| उगिदचां | 84 | Pāṇini | VII-i-80. |
| उणादयो | 1, 29, 31, 66 | Pāṇini | III-iii-1. |
| उणादयोऽव्यु- | 2, 31 | Mahābhāṣya | II-190. |
| उदात्तः | 178 | Pāṇini | VI-i-159. |
| उदोष्ठ्य- | 13, 145, 155 | Pāṇini | VII-i-102. |
| उब्जेर्बले | 204 | Uṇādi Sūtra | IV-197. |
| उरण् रपरः | 183, 215 | Pāṇini | I-i-51. |
| ऋदुशन | 204, 209 | Pāṇini | VII-i-94. |
| ऋत इत् | 14, 180 | Pāṇini | VII-i-100. |
| एतेर्णिच्च | 3 | Uṇādi Sūtra | II-120. |

| QUOTATION. | PAGE. | SOURCE. | |
|---|---|---|---|
| लक्षणप्रतिपदोक्तयोः | 1 | Paribhāṣā | 114. |
| लघावन्ते | 31 | Phiṭ Sūtra | 42. |
| लीला यस्य | 175 | Uṇādi Sūtra | III-87. |
| लुग्विकरण | 1 | Paribhāṣā | 91. |
| लोधं नयन्ति | 15 | Ṛg Veda | III-53-23. |
| लोष्टपलितौ | 221 | Uṇādi Sūtra | III-87. |
| वचिस्वपि | 59 | Pāṇini | VI-i-15. |
| वनो रच | 161 | Pāṇini | IV-i-7. |
| वराहः | 152 | | |
| वर्तका शकुनौ | 134 | Vārtika | VII-iii-45. |
| वर्धन्तु त्वा | 66 | Ṛg Veda | VII-99-7. |
| वस्नक्रयः | 74 | Pāṇini | IV-iv-13. |
| वहतुं यक्ष्मा | 35 | Āp. Mantrapāṭha | I-6 |
| वान्तो यि प्रत्यये | 168 | Pāṇini | VI-i-79. |
| वा यौ | 3, 104 | Pāṇini | II-iv-57. |
| वा लिटि | 3 | Pāṇini | II-iv-55. |
| वासी वृत्योदन- | 174 | Mahābhāṣya | |
| विधुरं किमतः | 20 | Kirātārjunīya | II-7. |
| विशदं विमलं | 67 | Halāyudha | I-32. |
| वीणां विपञ्चीं | 102 | | |
| वृषभो रोरवीति | 127 | Ṛg. Veda | IV-58-3. |
| वृषभो | 114 | Mahābhāṣya | I-3. |
| व्यधेः संप्र | 20 | Vārtika | |
| शासिवसि | 146 | Pāṇini | VII-ii-60. |
| शिल्पिनि | 70 | Pāṇini | III-i-145. |
| शुनः शेप इति | 198 | Kaiyaṭa | VI-iii-21. |
| श्रृस्वृ | 107 | Uṇādi Sūtra | I-10. |
| शेपपुच्छ | 198 | Vārtika | VI-iii-21. |
| शोममा- | 69 | Kaiyaṭa | |
| श्मनि श्रयतेः | 164 | Uṇādi | V-30. |
| षढोः | 103 | Pāṇini | VII-ii-41. |
| षिद्गौरादिभ्यश्च | 128 | Pāṇini | IV i-41. |
| सङ्ख्याया | 134 | Pāṇini | V-i-22. |
| सक्तुमिव | 177 | Mahābhāṣya | I-4. |

| QUOTATION. | PAGE. | SOURCE, | |
|---|---|---|---|
| सचतेः सक्तुः | 30 | Mahābhāṣya | I-4 |
| सत्याप | 79 | Pāṇini | III-i-25. |
| समानख्यातयः | 177 | Mahābhāṣya | I-4. |
| संज्ञापूर्वको | 84 | Paribhāṣā | 94. |
| संज्ञासु धातुरूपाणि | 175 | Vārtika | III-iii-1. |
| संप्रसार- | 105 | Pāṇini | VI-i-108. |
| संप्राप्य तीरं | 126 | Bhartṛkāvya | III-39. |
| सानसिधर्णसि | ·212 | Uṇādi Sūtra | IV-117. |
| सूतेः सप् | 192 | Mahābhāṣya | I-ii-64. |
| सीमन्तः केशेषु | 130 | cf. Mahābhāṣya | VI-i-94. |
| सौवर्यः सप्तम्यः | 31, 101 | Mahābhāṣya | 114. |
| स्तृञ् छादने ड्रूट् | 188 | Mahābhāṣya | I-ii-64. |
| स्तेनाद्यत् | 75 | Pāṇini | V-i-i-125. |
| स्तोः श्चुना | 37 | Pāṇini | III-iv-40. |
| स्तोत्रे वर्तनिः | 92 | Pāṇini (Gaṇa) | VI-i-160 |
| स्वच्छन्दा हि | 203 | | |
| स्वपो नन् | 161 | Pāṇini | III-iii-91. |
| स्वादिष्वसर्वे | 77 | Pāṇini | I-iv-17. |
| हन्तेश्च ह्वे | 221 | Uṇādi Sūtra | V-19. |
| हलः | 179 | Pāṇini | VI-iv-2. |

---

# NOTE ON SOME QUOTATIONS

Page 15. L. 1. The pūrvārdha of this verse is:—
वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ॥

Page 30. L. 1. The reading in the printed book is as follows:—

सक्तुः सचतेः दुर्धावो भवति। कसतेर्वा विपरीतात् विकसितो भवति ॥

Page 31. L. 5. The reading in the printed book is:—
स्वरविधौ सप्तम्यः तदन्तसप्तम्यो भवन्तीति ॥

Page 62. L. 11. The reading in the printed book is:—
क्षोत्तव्या जन्तवः ॥

Page 78. L. 7. In the reading of the Vārtika in the Mahābhāṣya क्विप् is omitted.

Page 114. L. 3. This Vārtika is divided into two in the Mahābhāṣya as follows;—

अज्विधौ भयस्योपसङ्ख्यानम् ॥

नपुंसके क्तादिनिवृत्त्यर्थम् ॥

Page 120. L. 3. The reading in the bhāṣya is:—
घरतिरस्मा अविशेषेणोपदिष्टः स घृतं घृणा घर्म इत्येवंविषय इति ॥

Page 149. L. 13–14. म्ला is omitted in the printed Vārtika. Keilhorn notes a reading where म्ला is found.

Page 157. L. 1. The reading of Vārtika in the printed Mahābhāṣya is:—

अन्त्यात् पूर्वं मस्जेः अनुषङ्गसंयोगादिलोपार्थम् ॥

Page 175. L. 3–4. This verse is printed as part of the Bhāṣya by Keilhorn but the author of the Auṇādika-padārṇava regards it as Vārtika,

Page 176. L. 8. The reading of the Bhāṣya in the printed book is:—

क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ॥

Page 188. L. 9 and Page 192. L. 2. The quotation occurs in two different places is the Mahābhāṣya. A whole paragraph of the bhāṣya is repeated in I. 245, 6 and II. 197-8.

# INDEX OF SŪTRAS.

---

# INDEX OF WORDS



* Words marked with asterisk are found only in the Commentary.

---